ननु—कदा कियत्काल अस्वाध्यायो भवति ? उच्यते—सूक्ष्म रज आकाशात् यावत्पतति तावद् अस्वाध्याय ।१। तथा धूमरी यावत्काल पतति तावद् अस्वाध्यायः । यस्माद्धूमरीपाते सकलक्षेत्र अप्कायमय स्यात्, तदा साधु कम्बलप्रावृतसर्वाङ्गोपाङ्गोऽपवरकमध्ये स्थितो भवति, मुखमपि नोद्घाटयति, किमप्यङ्गोपाङ्गं न इतस्ततो विक्षिपति, एवं जीवदयापालनाय धूमर्यां निपतितायां समस्तक्रिया कार्या ।२। तथा आकाशे गन्धर्वनगर देवताकृत दृश्यते, तथा उल्कापातो भवति, तथा कणकाः पतन्ति, तत्रोल्कापाते रेखा भवति उद्द्योतश्च, यत्र च रेखा उद्द्योतश्च न भवति, स कणक । तथा दिग्दाहो दशदिशा उज्ज्वलन्त्यो दृश्यते, चतुर्दिशा रक्तत्व वह्निसदृश स्याद्, एतेषु सत्सु विद्युत्पाते च अस्वाध्यायनिवर्ति तेषु प्रहरमेकमस्वाध्यायः । तत्र वर्षतौ सप्त कणकाः, शीतकाले पञ्च ५ उष्णकाले त्रय ३ कणका-पतति तदाऽस्वाध्यायः प्रहरमेकं यावत्, तदा अस्वाध्यायो निर्वृते—तेषु प्रहरद्वय यावत् अस्वाध्याय ।४। अकाल गर्जिते प्रहरद्वयं यावदस्वाध्यायः ।५। अकालविद्युज्झात्कारे प्रहरमेक यावदस्वाध्याय ।६। आषाढकार्तिकचातुर्मासिकप्रतिक्रमणानन्तर अध्ययन प्रतिपदं यावत्, द्वितीयाया शुध्यते, श्रीस्थानाङ्गे चतुर्थस्थाने द्वितीयोद्देशकेऽप्युक्तं (२१३ पत्रे)—"नो कप्पइ निग्गथाण वा निग्गंथीण वा चउहिं महापडिवएहिं सज्झाय करित्तए त जहा—आसाढपाडिवए १ इंदमहपाडिवए २ कत्तियपाडिवए ३ सुगिम्हपाडिवए" ४ इति ।६। आश्विनशुक्लपञ्चमीमध्याह्नादारभ्य कार्तिककृष्णप्रतिपदं यावत् अस्वाध्यायकाल उपरि शुध्यते। ७। चैत्रशुक्लपञ्चमीमध्याह्नादारभ्य वैशाखकृष्णप्रतिपद यावदस्वाध्यायः, परं अत्राऽयं विशेषः—चैत्रशुक्लैकादशीत आरभ्य मध्ये पूर्णिमाया यद् दिनत्रय 'अचित्तरज

उड्डावणियं करेमि काउस्सग्ग' लोगस्स ४ चिंत्यते, यदि एकादशीदिने न स्मर्यते तदा द्वादशीत्रयोदशीदिनेषु कायोत्सर्गः क्रियते, यदि द्वादशीदिने न स्मर्यते, तदा त्रयोदशी चतुर्दशी पूर्णिमाया यावत् कायोत्सर्गः क्रियते, यदि त्रयोदशीदिनेऽपि नो स्मर्यते, तदाऽऽगामिनं चैत्र यावद्धूलिर्नोड्डीयते तावदस्वाध्यायः । अयमर्थश्च एव—शुक्लैकादशीदिनात् "सचित्तरज उड्डावणत्थं करेमि काउस्सग्ग" इत्यादिना दिनत्रयं यावत् कायोत्सर्गं क्रियते । विस्मृते तु पूर्णिमा यावदन्यथा वर्षमप्यस्वाध्यायः । ८ । द्वयो राज्ञोः कलहे म्लेच्छादिभये उपाश्रयासन्नवासिस्त्रीपुरुषयुद्धे होलक्या भस्मोड्डयने चैतानि यावन्त काल वर्तन्ते तावदस्वाध्याय । ९ । राज्ञो मृत्युकाले जाते यावत् नवीनो राजा पट्टे नोपविशति तावदस्वाध्याय , स्थापितेऽपि राज्ञि यावदसमञ्जस न निवर्तते तावदस्वाध्याय' । १० । नगरप्रधानपुरुषे मृते प्रहराष्टक यावदस्वाध्यायः । ११ । उपाश्रयात् सप्तगृहमध्ये कोऽपि प्रसिद्धपुरुषो म्रियते तदाऽहोरात्र यावदस्वाध्याय' । १२ । तथाऽनाथसामान्यपुरुषमरणे कलेवरोत्थानानन्तर शुध्यते, एव तिर्यङ्मरणेऽपि । १३ । अथाऽऽचार्य १ महर्द्धिक २ कृतानशनमहातपस्वि ३ बहुस्वजनवल्लभ ४ मरणे दिनत्रयमस्वाध्याय एकदिनमुपवास , अन्येषा मरणे द्वयमपि न । १४ । तिर्यग् रुधिरे पतिते अण्डके स्फुटिते, गवि च प्रसूतायां, जरायुपतने शतहस्तमध्ये प्रहरत्रय यावदस्वाध्याय । अण्डके पतिते तिलकाचार्यकृतावश्यकवृत्तौ अयं विशेष —वसतेरन्तर्बहिर्वा अण्डक भिन्नमुज्झित वा यतिकल्पोपरि तदा हस्तपटे परतः त्यक्त्वा कल्पं क्षालयन्ति, तत' शुद्ध, भूमौ तु भिन्नेन भूमिं खनन्ति यतस्ता खनित्वाऽपि छर्दितेन शुध्यति, केवल पौरुषीत्रय परिह्रियते । १५ । मनुष्यरुधिरे पतिते उद्धृतानन्तरमपि अहोरात्रमस्वाध्यायः, तथा बहुवृष्टिपतनेन भूमिः सिक्ता जायते

तर्हि स्वल्पवेलयाऽपि शुध्यति, घटिमात्ररात्रिशेषे मनुष्यसम्बन्धि रुधिर पतितमुत्सृत च ततः सूर्योद्गमे शुद्धि- । १६ । तथा मनुष्यास्थि निपतिते द्वादशवर्षाणि अस्वाध्यायः । १७ । तथा दन्तो वा दंष्ट्रा वा पतिता बह्वायासेन विलोकिताऽपि चेन्न लब्धा, "तदा तत उड्डावणिअं करेमि काउस्सग्ग" इत्युक्त्वा कायोत्सर्गः क्रियते, तत्र नमस्कार एकश्चिन्त्यते पारायित्वा कथ्यते च, तदनन्तर अस्वाध्यायो न भवति । १८ । तथा यदि मार्जारी जीवित मूषक गृहीत्वा याति तदा नाऽस्वाध्यायः, अथ विनाश्य नयति तदाऽहोरात्रमस्वाध्यायः । १९ । तिर्यगवयवाः तद्रुधिर च षष्टिहस्तमध्येनाऽस्वाध्याय कुर्वन्ति । २० । मनुष्यावयवरुधिरपाते हस्तशतमध्येऽस्वाध्यायो, यद्यन्तरे उभयदिग्गामी शकटस्य मार्गो न भवति । २१ । तथा स्त्रिया मासि मासि ऋतुधर्मः समायाति, तदनन्तर दिवसत्रयं यावदस्वाध्यायः । तथा कस्याश्चित्प्रदररोगोदयाद्दिवसत्रिकस्योपर्यपि रुधिरं पतति तदा 'असज्झाय उड्डावणिय' कायोत्सर्ग कृते पश्चात् शुध्यति । २२ । तथा आर्द्रानक्षत्रादारभ्य स्वातिनक्षत्रपर्यन्तगर्जित विद्युत्पातश्च न स्वाध्याय उपघ्नन्ति । तारकादर्शनमपि यावत् स्वातिनक्षत्रे आदित्यस्य गमन भवति, शेषकाले पुनरवश्य तारकादिकदर्शने शुध्यते, अथ केषांचित् साधूनां तथाविधनक्षत्रपरिज्ञान न भवति, तत आषाढचातुर्मासिकादारभ्य कार्तिकचातुर्मासिकं यावद् विद्युद्गर्जितेष्वपि नाऽस्वाध्यायः, उल्का तु सदाऽपि स्वाध्यायमुपहन्ति प्रहर यावत् । २३ । तथा सशब्दो महाशब्दरहितो भूकम्पः तयोर्जातयोः प्रहराष्टक यावदस्वाध्यायः । २४ । तथा प्रदीपने लग्ने यावन्नोपशमः तावदस्वाध्यायः । २५ । तथा वर्षाकाल बुद्बुदवृष्टिः अहोरात्रोपरि यावद्वर्षति तावदस्वाध्याय । २६ । विधिप्रपायां २५ पत्रे एवं पाठः—

"संपयसुट्ठी असज्झाओ बारससु वि मासेसु बुब्बुअवरिसे अहोरत्ताओ जइ वि जइ वरिसइ तो असज्झाओ, बुब्बुअवज्जवरिसे दोण्हमहोरत्ताणमुवरि जाव पडइ ताव असज्झाओ"त्ति बुद्बुदवर्जं वर्षं वर्षति द्वाभ्यामहोरात्राभ्याम् उपरिष्टाद् यावद्वर्षति तावदस्वाध्यायः । २७ । फुसारमात्रवर्षणे सप्ताहोरात्रोपरि यावद्वर्षति तावदस्वाध्याय । २८ । सूर्येऽनुद्गते, मध्याह्ने २ सन्ध्यायां ३ अर्धरात्रे च ४ सन्ध्याचतुष्टयेऽप्यस्वाध्याय । २९ । पुत्रे जाते शतहस्तमध्ये दिनसप्तक यावदस्वाध्यायः, पुत्र्यां जाताया तु दिनाष्टकमस्वाध्यायः, स्त्रियारक्तोत्कटत्वात् । ३० । शुक्लपक्षे प्रतिपदाया द्वितीयाया तृतीयाया वा आरभ्य दिनत्रय यावत् यूपकनामाऽस्वाध्यायो भवति, रात्रिप्रथमप्रहरं यावत् तत्र प्रादोषिककालो न शुध्यति, एवं पाक्षिकदिनेऽपि, श्रीतिलकाचार्यकृत–आवश्यकवृत्तौ यूपकनिरूपणमेव, तथाहि–"जूअओ सुक्कदिण तिन्नि" सन्ध्याप्रभा चन्द्रप्रभा च युगपद् भवतः स युगपद्भावः, शुक्लपक्षे हि दिनत्रय सन्ध्याप्रभाया चन्द्रप्रभावृतत्वात् सन्ध्याछेदो न ज्ञायते, तत्र शुक्लप्रतिपदा–द्वितीया–तृतीयासु कालवेलानवबोधात्, प्रादोपिककालाऽग्रहणे सूत्रपौरुपि अकरण, तथा "केसिं च होइ मोहाओ जूवओ ताव होइ आइन्नो । जेसिं तु अणाइन्ना, तेसिं किर पोरिसी तिन्नि ॥ २ ॥" व्याख्या–केपाञ्चिद्भवति अमोहात्–अमूढत्वात् यूपक–चुर्दिन पुष्योपरागमुदये अस्ति एष, आदित्य–आताम्रः कृष्ण श्यासः शकटोद्धिसस्थितो वा जगतामुत्पातरूपः तावत् तत्र पौरुषीं अनध्यायत्वेन आचीर्णं । उत्तरार्धं स्पष्ट नवरं "पोरिसि तिन्नि" पौरुपीत्रय अनध्यायः । ३१ ।

अथ चन्द्रग्रहणास्वाध्यायो लिख्यते–चन्द्रग्रहणस्योत्कृष्टतो द्वादश प्रहरान् अस्वाध्यायः, कथमित्याह–कदापि काले उत्पा-

तर्हि स्वल्पवेलयाऽपि शुध्यति, घटिमात्ररात्रिशेषे मनुष्यसम्बन्धि रुधिर पतितमुद्धृत च ततः सूर्योद्गमे शुद्धि । १६ । तथा मनुष्यास्थि निपतिते द्वादशवर्षाणि अस्वाध्यायः । १७ । तथा दन्तो वा दंष्ट्रा वा पतिता नष्टायासेन विलोकिताऽपि चेन्न लब्धा, "तदा दंत उहडावणिअं करेमि काउस्सग्ग" इत्युक्त्वा कायोत्सर्गः क्रियते, तत्र नमस्कार एकश्चिन्त्यते पारयित्वा कथ्यते च, तदनन्तर अस्वाध्यायो न भवति । १८ । तथा यदि मार्जारी जीवितं मूषक गृहीत्वा याति तदा नाऽस्वाध्यायः, अथ विनाश्य नयति तदाऽहोरात्रमस्वाध्यायः । १९ । तिर्यगवयवाः तद्रुधिर च षष्टिहस्तमध्येनाऽस्वाध्याय कुर्वन्ति । २० । मनुष्यावयवरुधिरपाते हस्तशतमध्येऽस्वाध्यायो, यदन्तरे उभयदिग्गामी शकटस्य मार्गो न भवति । २१ । तथा स्त्रिया मासि मासि ऋतुधर्मः समायाति, तदनन्तर दिवसत्रय यावदस्वाध्यायः । तथा कस्याश्चित्प्रदररोगोदयाद्दिवसत्रिकस्योपर्यपि रुधिरं पतति तदा 'असज्झाय उहडावणिय' कायोत्सर्गे कृते पश्चात् शुध्यति । २२ । तथा आर्द्रानक्षत्रादारभ्य स्वातिनक्षत्रपर्यन्तगर्जित विद्युत्पातश्च न स्वाध्याय उपघ्नन्ति । तारकादर्शनमपि यावत् स्वातिनक्षत्रे आदित्यस्य गमन भवति, शेषकाले पुनरवश्य तारकादिकदर्शने शुध्यते, अथ केषाचित् साधूनां तथाविधनक्षत्रपरिज्ञान न भवति, तत आषाढचातुर्मासिकादारभ्य कार्तिकचातुर्मासिकं यावद् विद्युद्गर्जितेष्वपि नाऽस्वाध्यायः, उल्का तु सदाऽपि स्वाध्यायमुपहन्ति प्रहर यावत् । २३ । तथा सशब्दो घड़हड़शब्दरहितो भूकम्पः तयोर्जातयो प्रहराष्टक यावदस्वाध्यायः । २४ । तथा प्रदीपने उभे यावन्नोपशमः तावदस्वाध्यायः । २५ । तथा वर्षाकाल बुद्बुदवृष्टि अहोरात्रोपरि यावद्वर्षति तावदस्वाध्याय । २६ । विधिप्रपायां २५ पत्रे एष पाठः—

"संपयवुट्ठी असज्झाओ बारससु वि मासेसु बुब्बुअवरिसे अहोरत्ताओ उड्ढंपि जइ वरिसइ तो असज्झाओ, बुब्बुअ वज्जवरिसे दोण्हमहोरत्ताणमुवरि जाव पडइ ताव असज्झाओ"त्ति बुद्बुदवर्जं वर्षं वर्षति द्वाभ्यामहोरात्राभ्याम् उपरिष्टाद् यावद्वर्षति तावदस्वाध्यायः । २७ । फुसारमात्रवर्षणे सप्ताहोरात्रोपरि यावद्वर्षति तावदस्वाध्याय २८ । सूर्येऽनुद्गते, मध्याह्ने २ सन्ध्यायां ३ अर्धरात्रे च ४ सन्ध्याचतुष्टयेऽप्यस्वाध्यायः । २९ । पुत्रे जाते शतहस्तमध्ये दिनसप्तक यावद-स्वाध्याय, पुत्र्या जाताया तु दिनाष्टकमस्वाध्यायः, स्त्रियारक्तोत्कटत्वात् । ३० । शुक्लपक्षे प्रतिपदाया द्वितीयाया तृतीयाया वा आरभ्य दिनत्रय यावत् यूपकनामाऽस्वाध्यायो भवति, रात्रिप्रथमप्रहर यावत् तत्र प्रादोषिककालो न शुध्यति, एव पाक्षिकदिनेऽपि, श्रीतिलकाचार्यकृत–आवश्यकवृत्तौ यूपकनिरूपणमेव, तथाहि–"जूअओ सुक्कदिण तिन्नि" सन्ध्याप्रभा चन्द्रप्रभा च युगपद् भवतः स युगपद्भावः, शुक्लपक्षे हि दिनत्रय सन्ध्याप्रभाया चन्द्रप्रभावृतत्वात् सन्ध्या-छेदो न ज्ञायते, तत्र शुक्लप्रतिपदा–द्वितीया–तृतीयासु कालवेलानवबोधात्, प्रादोषिककालाऽग्रहणे सूत्रपौरुषि अकरण, तथा "केसिं च होइ मोहाओ जूअओ ताव होइ आइन्नो । जेसिं तु अणाइन्ना, तेसिं किर पोरिसी तिन्नि ॥ २ ॥" व्याख्या–केषाञ्चिद्भवति अमोहात्–अमूढत्वात् यूपक–दुर्दिन पुष्योपरागमुदये अस्ति एव, आदित्य–आताम्र कृष्णः श्यामः शक-टोद्धिसस्थितो वा जगतामुत्पातरूपः तावत् तत्र पौरुषीं अनध्यायत्वेन आचीर्णः । उत्तरार्धं स्पष्ट नवर "पोरिसि तिन्नि" पौरुषीत्रय अनध्यायः । ३१ ।

अथ चन्द्रग्रहणास्वाध्यायो लिख्यते–चन्द्रग्रहणस्योत्कृष्टतो द्वादश प्रहरान् अस्वाध्यायः, कथमित्याह–कदापि काले उत्पा-

स्तवभणन, ततो दशनमस्कार–कथनानन्तर श्रीशत्रुञ्जयपुण्डरीकाराधनार्थं "करेमि काउस्सग्ग"मित्यादि विधिपूर्वं कायोत्सर्गस्तत्र दशलोगस्स चिन्त्यते पारिते लो० १ दशगाथाप्रमाण स्तोत्र च, एवमेका पूजा जाता १ इत्थमेव द्वितीया २ तृतीया ३ चतुर्थी ४ पञ्चमी च ५ पूजा कार्या, विशेषतस्तु तत्र अयम्–द्वितीया पूजा जाता २ तस्या द्वितीयपूजाया विंशतिनमस्कारा विंशतिपुष्पमाला विंशतिवस्तुढौकन च कार्य, पूर्वविधिना कायोत्सर्गकरण लोगस्स २० चिन्तन पारिते च एक १ लोग० विंशति २० गाथास्तोत्र चेति द्वितीया पूजा जाता २। तृतीयपूजाया त्रिंशत् नमस्कारा ३० त्रिंशत् ३० पुष्पाणि ३० त्रिंशद्वस्तु ढौकन त्रिंशल्लोगस्स ३० कायोत्सर्गः पूर्ववत्त्रिंशद्गाथास्तोत्र ३० चेति तृतीयपूजा जाता ३। चतुर्थपूजाया चत्वारिंशत् नमस्काराः, चत्वारिंशत् पुष्पाणि, चत्वारिंशद् वस्तुढौकन कायोत्सर्गे चत्वारिंशत् लोगस्स चिन्तन पारिते एकलोगस्स चत्वारिंशद्गाथास्तोत्र इति चतुर्थीपूजा जाता ४। पञ्चमपूजाया पञ्चाशन्नमस्काराः ५० पञ्चाशत्पुष्पाणि ५० पञ्चाशद्वस्तु ५० ढौकन पञ्चाशल्लोगस्स ५० कायोत्सर्गं पारिते एक १ लोगस्स पञ्चाशद्गाथास्तोत्र ५० चेति पञ्चमीपूजा जाता ५। पूजायां पूजाया प्रान्ते काऽपि देशैः कैरपि दशाविंशतिकलयोऽपि कार्यन्ते तथा पूजा पञ्चकानन्तर एकैकपूजानन्तरं वा यथाशक्ति यथासम्भवं महाध्वजारोपः संघाधिपेन कार्यः, तत्राऽऽरात्रिक १ मङ्गलप्रदीप २ गुरुभक्ति ३ संघभक्ति ४ साधर्मिकवात्सल्य ५ संघपतितिलक ६ कर्तव्यानि कार्याणि, प्रान्ते धर्मोपदेशो शत्रुञ्जयमाहात्म्यवर्णन ॥

॥ इति चैत्रपूर्णिमादेववन्दनविधिरधिकारः ॥ ८० ॥

ननु–गुरूणा स्तूपस्य प्रतिमायाश्च प्रतिष्ठा क्रियते, तत्र को विधिः प्रतिपादितोऽस्ति ? उच्यते—अत्र गुरुपरम्परागत-

पत्रलिखितविधि प्रमाण, स चाऽय शुमदिने शुभनक्षत्रे शुभवेलाया च गुरुणा स्तूप–प्रतिमाप्रतिष्ठा क्रियते, तत्र रात्रिजागरणमहोत्सवपूर्वक प्रातः संघसमक्ष सपुत्रकलत्रा पवित्रा कृतस्नानाः परिहितधौतवस्त्राः चत्वार श्रावकाः समागच्छन्ति, तत्करेषु चतुरङ्गुलाः श्राविकाः सधवाः कङ्कणं बध्नन्ति, तन्भाले च कुङ्कुमतिलक कुर्वन्ति, अथ ते चत्वारोऽपि पुरुषाः उत्कृष्टतोऽष्टोत्तरशततीर्थजलौषधीभृतान् तदभावे एकविंशतितिलकतीर्थजलौषधीभृतान् कलशान् लात्वा ऊर्ध्वीभूय तिष्ठन्ति, ततो दशदिक्पालस्थापना क्रियते, सा चैवं कार्या, ओं ह्रीँ इन्द्राय सायुधाय सवाहनाय सपरिजनाय अस्मिन् जम्बुद्वीपे दक्षिणभरतार्द्धक्षेत्रे अमुकनगरे, अमुकजिनचैत्ये इह प्रतिष्ठाया आगच्छ आगच्छ बलिं गृहाण बलिं गृहाण उदय अभ्युदय च कुरु कुरु स्वाहा १ एव अग्नये २ यमाय ३ नैर्ऋताय ४ वरुणाय ५ वायवे ६ कुवेराय ७ ईशानाय ८ ब्रह्मणे ९ नागाय १० इति । एव ९ नव ग्रहस्थापनाऽपि कार्या, सर्वत्रोपरि बलिबाकुललपनश्रीमोचन वासक्षेपश्च कार्यः, ततो दशदिक्षु बलिबाकुलोच्छालन कार्य, ततस्तेषु पुरुषा पादुके पञ्चामृतेन स्नपयन्ति, तत स्तूपपूजा कार्या, ततः सधवा स्त्री कुङ्कुमहस्तौ ददाति, ततः कर्पूरकस्तूरीमिश्रितकेसरचन्दनाभ्यां पादुकापूजा कार्या, ततो "वर्धमानविद्यया" वासक्षेपः कार्यः, ततस्तदग्रे अक्षतपुञ्जत्रयं कार्य, तदुपरि पूगीफलत्रय मोच्य, चतुर्दिक्षु नालिकेरचतुष्टय भङ्क्त्वा सर्वेषा देय, ततो धूपः कार्यः, तत सधवाः स्त्रियो गायन्ति, वादित्राणि वाद्यन्ते, दान च दीयते, गुरुभक्तिश्च क्रियते साधर्मिकवात्सल्य च विस्तरेण कार्य, ततो गीतगानवाद्यवादनपुरस्सर श्रीसघेन सम धर्मशालाया आगत्य श्रीगुरुपार्श्वे प्रति-

स्तवभणन, ततो दशनमस्कार–कथनानन्तर श्रीशत्रुञ्जयपुण्डरीकाराधनार्थे "करेमि काउस्सग्ग"मित्यादि विधिपूर्वं कायोत्सर्गस्तत्र दशलोगस्स चिन्त्यते पारिते लो० १ दशगाथाप्रमाण स्तोत्र च, एवमेका पूजा जाता १ इत्थमेव द्वितीया २ तृतीया ३ चतुर्थी ४ पञ्चमी च ५ पूजा कार्या, विशेषतस्तु तत्र अयम्–द्वितीया पूजा जाता २ तस्या द्वितीयपूजाया विंशतिनमस्कारा विंशतिपुष्पमाला विंशतिवस्तुढौकन च कार्यं, पूर्वविधिना कायोत्सर्गकरण लोगस्स २० चिन्तन पारिते च एक १ लोग० विंशति २० गाथास्तोत्र चेति द्वितीया पूजा जाता २। तृतीयपूजाया त्रिंशत् नमस्कारा ३० त्रिंशत् ३० पुष्पाणि ३० त्रिंशद्वस्तु ढौकन त्रिंशल्लोगस्स ३० कायोत्सर्गः पूर्ववत्रिंशद्गाथास्तोत्र ३० चेति तृतीयपूजा जाता ३। चतुर्थपूजाया चत्वारिंशत् नमस्कारा, चत्वारिंशत् पुष्पाणि, चत्वारिंशद् वस्तुढौकन कायोत्सर्गे चत्वारिंशत् लोगस्स चिन्तन पारिते एकलोगस्स चत्वारिंशद्गाथास्तोत्र इति चतुर्थीपूजा जाता ४। पञ्चमपूजाया पञ्चाशन्नमस्काराः ५० पञ्चाशत्पुष्पाणि ५० पञ्चाशद्वस्तु ५० ढौकन पञ्चाशल्लोगस्स ५० कायोत्सर्गः पारिते एक १ लोगस्स पञ्चाशद्गाथास्तोत्र ५० चेति पञ्चमीपूजा जाता ५। पूजायां पूजाया प्रान्ते काऽपि देशैः कैरपि दशादिजुतकृतयोऽपि कार्यन्ते तथा पूजा पञ्चकानन्तर एकैकपूजानन्तरं वा यथाशक्ति यथासंभव महाध्वजारोपः संघाधिपेन कार्यः, तत्राऽऽरात्रिक १ मङ्गलप्रदीप २ गुरुभक्ति ३ संघभक्ति ४ साधर्मिकवात्सल्य ५ संघपतितिलक ६ कर्तव्यानि कार्याणि, प्रान्ते धर्मोपदेशे शत्रुञ्जयमाहात्म्यवर्णन ॥

॥ इति चैत्रपूर्णिमादेववन्दनविधिरधिकारः ॥ ८० ॥

ननु–गुरूणां स्तूपस्य प्रतिमायाश्च प्रतिष्ठा क्रियते, तत्र को विधिः प्रतिपादितोऽस्ति ? उच्यते—अत्र गुरुपरम्परागत-

भक्तैर्जिनप्रीतये
कुव्यसनैर्नामेरधो यद्धृतम् । स्पृष्टं दुष्टजनैर्घनैरभिहत यत् दूषित कीटकै-स्त्याज्य तत् कुसुम दल फलमथो
॥ १२ ॥ नैक पुष्पं द्विधा कुर्या-न्न छिन्द्यात् कलिकामपि । चम्पको दलभेदेन, यतिहत्यासम भवेत् ॥ १३ ॥ गन्ध-
धूपाक्षतैः स्रग्भिः, प्रदीपैर्बलिवारिभिः । प्रधानैश्च फलै पूजा, विधेया श्रीजिनेशितुः ॥ १४ ॥ शान्तौ श्वेतं जये श्यामं, भद्रे
रक्तं भये हरित् । पीत धान्यादिके लाभे, पञ्चवर्ण तु सिद्धये ॥ १५ ॥ खण्डिते सन्धिते छिन्ने, रक्ते रौद्रे च वाससि ।
दान पूजा तथा होमः, स्वाध्यायो निष्फलं भवेत् ॥ १६ ॥ वर्जयेदर्हतः पृष्ठ-मग्रत शिवसूर्ययोः । पार्श्वतो ब्रह्म-
विष्णोश्च, चण्डी सर्वत्र वर्जयेत् ॥ १७ ॥ गणं नाडीं तथा राशिं, तारां राशिं शमेय च । योनिवर्गं रिपुलभ्ये, प्रति-
माया विलोकयेत् ॥ १८ ॥

॥ इति प्रतिमाऽधिकारः ॥

अतीताब्दशत यच्च, यच्च स्थापितमुत्तमैः । तद्व्यगमपि पूज्य स्याद्, बिम्ब तन्निष्फल नहि ॥ १ ॥ आरभ्यैकाङ्गुलाद्-
द्वय, यावदेकादशाङ्गुलम् । गृहेषु बिम्ब तत्पूज्य, प्रासादार्हं तदूर्ध्वकम् ॥ २ ॥ एक गुणे भवेत् श्रेष्ठ, द्व्यङ्गुल धननाश-
नम् । त्र्यङ्गुलेन भवेत् सिद्धि-र्वर्जयेच्चतुरङ्गुलम् ॥ ३ ॥ पञ्चाङ्गुल भवेद्वित्त-मुद्वेग तु षडङ्गुलम् । सप्ताङ्गुलेन गोवृद्धि-स्त्य-
जेदष्टाङ्गुल सदा ॥ ४ ॥ नवाङ्गुल तु पुत्राय, द्रव्यहानिर्दशाङ्गुलम् । एकादशाङ्गुल बिम्ब, सर्वकामार्थसिद्धिदम् ॥ ५ ॥
ऊर्ध्वदृग् द्रव्यनाशाय, तिर्यग्दृग् भोगदा जये । श्रेयस्करी समदृष्टिः, कुलनाशे त्वधोमुखी ॥ ६ ॥ पद्मासनसमासीनो,
नासाग्रन्यस्तलोचनः । मौनी वस्त्रावृतास्योऽय, पूजा कुर्याजिनेशितु ॥ ७ ॥ स्नान १ विलेपन २ विभूषण ३ पुष्प ४

लाभोपदेशं च श्रुत्वा सर्वेऽपि स्वस्थानं व्रजन्ति, ततो दिनदशक यावत् स्तूपपूजा कार्या नैवेद्यो मुच्यते, भोगश्चोत्क्षिप्यते, प्रतिष्ठाकारकश्च दशदिनानि एकाशनं करोति, शीलव्रत च पालयति ॥ ८१ ॥

॥ इति गुरुस्तूपप्रतिष्ठाविधिरधिकारः ॥ ८१ ॥

ननु–श्रावकाणां गृहे देवतासरः कुत्र स्थाप्यते?, केन विधिना श्रावकाः पूजा कुर्वन्ति? उच्यते–तत्राऽर्थे श्रीउमास्वातिवाचककृत पूजाप्रकरणमेव प्रमाण, तद्यदे—"स्नानं पूर्वोन्मुखीभूय, प्रतीच्या दन्तशोधनम्। उदीच्या श्वेतवस्त्राणि, पूजा पूर्वोत्तरामुखी ॥ १ ॥ गृहे प्रविशतां वाम–भागे स्वल्पविवर्जिते। देवतावसर कुर्यात्, सार्धहस्तोर्ध्वभूमिके ॥ २ ॥ नीचैर्भूमिस्थितिं कुर्याद्, देवतावसर यदि। नीचैर्नीचैस्ततोऽवश्य, सन्तत्याऽपि सम भवेत् ॥ ३ ॥ तयाऽर्चकः स्यात्पूर्वस्या, उत्तरस्या च संमुखम्। दक्षिणस्या दिशो वर्जी, विदिग्वर्जक एव च ॥ ४ ॥ पश्चिमाभिमुखः कुर्यात्, पूजा च जिनमूर्तये। तदा स्यात् सन्ततिच्छेदो, दक्षिणस्यामसन्ततिः ॥ ५ ॥ आग्नेय्या तु यदा पूजा, धनहानिर्दिने दिने। वायव्यां सन्ततिर्नैव नैर्ऋत्या च कुलक्षयः ॥ ६ ॥ ऐशान्या संमुखः किंचित्, सन्ततिर्नैव जायते। अङ्घ्रिजानुकरांसेषु, मूर्ध्नि पूजा यथाक्रमम् ॥ ७ ॥ भाले कण्ठे हृदम्भोजे, उदरे तिलक तथा। [तथा] नवभिस्तिलकैः पूजा, करणीया निरन्तरम् ॥ ८ ॥ श्रीचन्दन विना नैव, पूजा कुर्यात् कदाचन। प्रभाते प्रथम वास–पूजा कार्या विचक्षणैः ॥ ९ ॥ मध्याह्ने कुसुमैः पूजा, सन्ध्यायां दीपधूपयुक्। वामाङ्गे धूपदाहः स्या–दग्रपूजाऽत्र संमुखी ॥ १० ॥ अर्हतो दक्षिणे भागे, दीपस्य च निवेशनम्। ध्यान तु दक्षिणे भागे, चैत्यानां वन्दन तथा ॥ ११ ॥ हस्तात्प्रस्खलितं क्षितौ निपतितं लग्न क्वचित् पादयो–र्यन्मूर्ध्वोर्ध्वगत धृतं

कुव्यसनैर्नामैरघो यच्चतम् । स्पृष्टं दुष्टजनैर्घनैरभिहत यत् दूषित कीटकै–स्त्याज्य तत् कुसुम दल फलमथो भक्तैर्जिनप्रीतये ॥ १२ ॥ नैक पुष्प द्विधा कुर्या–न्न छिन्द्यात् कलिकामपि । चम्पको दलभेदेन, यतिहत्यासम भवेत् ॥ १३ ॥ गन्ध-धूपाक्षतैः स्रग्भिः, प्रदीपैर्बलवारिभिः । प्रधानैश्च फलै पूजा, विधेया श्रीजिनेशितुः ॥ १४ ॥ शान्तौ श्वेत जये श्यामं, भद्रे रक्त भये हरित् । पीत धान्यादिके लाभे, पञ्चवर्णं तु सिद्धये ॥ १५ ॥ खण्डिते सन्धिते छिन्ने, रक्ते रौद्रे च वाससि । दान पूजा तथा होमः, स्वाध्यायो निष्फलं भवेत् ॥ १६ ॥ वर्जयेदर्हतः पृष्ठ–मग्रत शिवसूर्ययोः । पार्श्वतो ब्रह्म-विष्णोश्च, स्रण्डी सर्वत्र वर्जयेत् ॥ १७ ॥ गण नाडीं तथा राशिं, तारा राशिं शमेव च । योनिवर्गं रिपुलभ्ये, प्रति-माया विलोकयेत् ॥ १८ ॥

॥ इति प्रतिमाऽधिकारः ॥

अतीताब्दशत यच्च, यच्च स्थापितमुत्तमैः । तद्व्यङ्गमपि पूज्य स्याद्, बिम्ब तन्निष्फल नहि ॥ १ ॥ आरभ्यैकाङ्गुलाद्-व्यङ्, यावदेकादशाङ्गुलम् । गृहेषु बिम्ब तत्पूज्य, प्रासादार्हं तदूर्ध्वकम् ॥ २ ॥ एक गुणे भवेत् श्रेष्ठ, द्व्यङ्गुल धननाश-नम् । त्र्यङ्गुलेन भवेत् सिद्धि–र्वर्जयेच्चतुरङ्गुलम् ॥ ३ ॥ पञ्चाङ्गुल भवेद्वित्त–मुद्वेग तु षडङ्गुलम् । सप्ताङ्गुलेन गोवृद्धि–स्त्य-जेदष्टाङ्गुल सदा ॥ ४ ॥ नवाङ्गुल तु पुत्राय, द्रव्यहानिर्दशाङ्गुलम् । एकादशाङ्गुल बिम्ब, सर्वकामार्थसिद्धिदम् ॥ ५ ॥ ऊर्ध्वदृग् द्रव्यनाशाय, तिर्यग्दृग् भोगदा जये । श्रेयस्करी समदृष्टिः, कुलनाशे त्वधोमुखी ॥ ६ ॥ पद्मासनसमासीनो, नासाग्रन्यस्तलोचनः । मौनी वस्त्रावृतास्योऽय, पूजा कुर्याज्जिनेशितुः ॥ ७ ॥ स्नान १ विलेपन २ विभूषण ३ पुष्प ४

घास ५, धूप ६ प्रदीप ७ फल ८ तन्दुल ९ पत्र १० पूगैः ११ । नैवेद्य १२ वारि १३ वसनै १४ चमरा १५ तपत्र, १६ वादित्र १७ गीत १८ नटन १९ स्तुति २० कोशवृद्धया २१ ॥ ८ ॥ इत्येकविंशतिविधा जिनराजपूजा, ख्याता सुरासुरगणैश्च कृता सदैव । खण्डीकृता कुमतिभि कलिकालयोगात्, यद्यत् प्रिय तदिह भाववशेन योज्यम् ॥ ९ ॥"

॥ इति श्रावकाणा देवतावसरस्थापनापूजाविधिरधिकार ॥ ८२ ॥

ननु—कल्पत्रेपोच्चारणं किमर्थं प्रतिपादितमस्ति ?, कुत्र च तद्विधिः ? उच्यते—कल्पत्रेपस्य आसेवनाशिक्षारूपत्वात् उक्त तद्विधान यदुक्त—

"सा पुण दुविहा सिक्खा, गहणे आसेवणे य नायव्वा । गहणे सुत्ताहिज्जण, आसेवण कप्पतिप्पाई ॥ १ ॥ इति" पुनरपि 'कयकप्पतिप्पकरिय'त्ति वचन च ततः सति शास्त्रोक्ते कल्पत्रेपविधौ श्रीजिनप्रभसूरिविनिर्मितविधिप्रपोक्तानुक्रमेण कर्तव्यतापाठो लिख्यते, तथाहि—"जोगा य कप्पतिप्प विणा न वहिज्जंति, कयकप्पतिप्पकरिय त्ति वयणाओ अओ संपय कप्पतिप्पविहि भण्णइ, तत्थ—चउसाढ—कत्तियचाउलपाडिवयाणतर पसत्थदिणे चउवाइअरिक्खे गुरुसोमवारे सुनिमित्तोवलद्धेहिं सव्वसवत्थवेढिअगिहत्थभायणेणं कप्पवाणिय माणित्ता जोइणीओ पिट्ठव वामओ वा काउ मुहहत्थपाय उल्ले काऊण अहारायणियाए छम्मासिअ कप्पो उत्तारिज्जइ, पविस्समाणस्स आसदसिआइय कय आउत्तजलेण पढम चउरो तिप्पाउ मुहे घिप्पति तओ पाएसु इत्थ इत्थ विण्णासो सपदाया नेवओ छम्मासिअकप्पे परदिआउ चेव तिप्पाउ घेप्पति इयरकप्पे दसिआ पुण चलकोप्परेहिं परदिआउ वा, तहा छम्मासिअ कप्पुत्तारणे उद्धट्ठिअस्स उद्धट्ठिओ तिप्पाउ दिज्जा,

उवविट्ठस्स उवविट्ठो सामन्न कप्पे नत्थि नियमो तओ वसहीभत्तुवगरणं च नाणोवगरणवज्ज सव्वपि ते पिज्जइ नयर मडलिट्ठाण गोमयलेवेकए ति पिज्जइ, कप्पमज्झे वा वरिअ पत्तभव मल्लग उद्धरणी पच्छाइ पमज्जणिआ तलिया लोहरत्थाइ अलेण कप्पिओ तिप्पिजइ, एव कप्पे उत्तारिए वसहिं सोहितु छडकेसाइ परिठ्ठविअ इरिअं पडिक्कमिय पढमं गुरुणा सज्झाए उक्खिविए मुहपोत्तिं पडिलेहिअ दुवालसावत्तवंदणं दाउं खमासमणेण भणंति, सज्झायं उक्खिवामो बीअ खमासमणेण सज्झाय उक्खिवणत्थं काउस्सग्गं करेमि तओ अन्नत्थूससीएणमिच्चाइ पढिअ नवकारं चउवीसत्थयं वा चिंचिंतिअ मुहेण तं भणिअ काउस्सग्गातिगं कुणंति, पढमं असज्झाइअ अणाउत्तउहडावणिअ, बीअं खुद्दोवद्दवउहडावणिअ, तइयं सक्काइवेयावच्चगरआराहणत्थं तिसु वि चउरुज्जोअ चिंतणं उज्जोअ भणणं च तओ खमासमणदुगेण सज्झायं संदिसावेमि सज्झायं करेमि इति भणिअ जाणुठिएहिं पंचमंगलपुव्वं धम्मो मंगलाइअमज्झयणतिअं सज्झाओ कीरइत्ति सज्झाय उक्खिवणविही ॥ ८१ ॥

॥ इति कल्पत्रेपोत्तारणविधिरधिकारः ॥ ८२ ॥

ननु–श्रीबृहत्खरतरगच्छे कोऽनुक्रमः प्रतिक्रमणविधे ?, कुत्र च सविधिः प्रतिपादितोऽस्ति ? उच्यते–अत्रानुक्रमः कोऽपि श्रीविधिप्रपा १ श्रीतरुणप्रभसूरिकृत–षडावश्यकबालावबोध २ श्रीजिनवल्लभसूरिकृत–सामाचारी ३ श्रीयोगशास्त्रवृत्तीयप्रकाशवृत्ति ४ श्रीप्रतिक्रमणहेतुगर्भ ५ प्रमुखग्रन्थानुसारेणाऽपि च स्वगच्छीयपरम्परातो ज्ञेयः, तत्र प्रथमं साधुर्गोचरीं प्रतिक्रम्य श्रावको वा सामायिकं लात्वा, गुर्वादेशेन 'जयति हुयणनमस्कार' कथयित्वा सर्वे समं "जयमहायसेत्यादि"

१० पूगीः ११ । नैवेद्य १२ धारि १३ वसनै १४ श्रमरा १५ तपत्र, १६
वास ५, धूप ६ प्रदीप ७ फल ८ तन्दुल ९ वस्त्र १० पूगीः ११ । नैवेद्य १२ धारि १३ वसनै १४ श्रमरा १५ तपत्र, १६
यावित्र १७ गीत १८ नटन १९ स्तुति २० कोषवृद्ध्या २१ ॥ ८ ॥ इत्येकविंशतिविधा जिनराजपूजा, ख्याता सुरासुर-
गणेश्च कृता सदैव । खण्डीकृता कुमतिभिः कलिकालयोगात्, यद्यत् प्रिय तदिह भाववशेन योज्यम् ॥ ९ ॥"

॥ इति श्रावकाणां देवतावसरस्थापनापूजाविधिरधिकारः ॥ ८२ ॥

ननु—कल्पत्रेपोत्तारण किमर्थं प्रतिपादितमस्ति ?, कुत्र च तद्विधिः ? उच्यते—कल्पत्रेपस्य आसेवनाशिक्षारूपत्वात् उक्त तद्विधान यदुक्त—

"सा पुण दुविहा सिक्खा, गहणे आसेवणे य नायव्वा । गहणे सुत्ताहिज्जण, आसेवण कप्पतिप्पाई ॥ १ ॥ इति"
पुनरपि 'कयकप्पतिप्पकरिय'त्ति वचन च ततः सति शास्त्रोक्ते कल्पत्रेपविधौ श्रीजिनप्रभसूरिविनिर्मितविधिप्रपोक्तानु-
क्रमेण कर्तव्यतापाठो लिख्यते, तथाहि—"जोगा य कप्पतिप्प विणा न वहिज्जति, कयकप्पतिप्पकरिय त्ति वयणाओ
अओ सपय कप्पतिप्पविहि भण्णइ, तत्थ—वरिसाह—कत्तियचउलपाडिवयाणंतर पसत्थदिणे चउवाइअरिक्खे गुरुसोमवारे
सुनिमित्तोवलचेहिं सदसवत्थवेढिअगिहत्थभायणेणं कप्पवाणिय माणित्ता जोइणीओ पिट्ठउ वामउ वा काउ मुहहत्थपाय
त्तले काऊण अहारायणियाए छम्मासिअ कप्पो उत्तारिज्जइ, पविस्समाणस्स आसंदसिआइय कय आवत्तजलेण पढम चउरो
तिप्पाउ मुहे खिप्पंति तओ पाएसु इत्थ हत्थ विण्णासो सपदाया नेतव्वो छम्मासिअकप्पे परदिसाउ चेव तिप्पाउ घेप्पति
इयरकप्पे दसिआ पुत्त चलकोप्परेहिं परदिसाउ वा, तहा छम्मासिअ कप्पुत्तारणे उवट्ठिअस्स चउट्ठिओ तिप्पाउ दिज्जा,

क्षमणेन श्रीआचार्यमिश्र १ द्वि० श्रीउपाध्यायमिश्र २ तृती० भट्टारकवर्तमान अमुकसूरि ३ चतुर्थ० सर्वसाधुवन्दना ४ पश्चात् भून्यस्तमस्तको मुखवस्त्रिकां मुखे दत्त्वा करद्वयं योजयित्वा "सव्वस्सवि देवसिअ" इत्यादि पठति, परं इच्छाकारेण संदिसहेति पदं न पठति, इदं च सकलातिचारबीजकभूतं अन्यत्राऽपि च ग्रन्थादौ बीजकस्य दर्शनात् 'जय जंतु कप्पपायवे' इत्यादाविव, अत्राऽवसरे श्राद्धस्तु साधुरिव पूर्ववत् क्षमाश्रमणचतुष्टयेन श्रीआचार्यादीन् वन्दित्वा इच्छकारि समस्तश्रावका वांदु इति भणति, श्रीहेतुगर्भे इत्थमेव भणनात्। अत्राऽऽह शिष्यः, ननु–प्रतिक्रमणप्रारम्भे प्रथमं कथं श्रीआचार्यादि वन्दनं विहितं ? उच्यते–प्रधानादि स्थानीयानां श्रीआचार्यादीनां बहुमाननेन स्वसमीहितसिद्धिर्भवतीति हेतोः यदुक्तं श्रीहेतुगर्भे लोकेऽपि हि–राज्ञः प्रधानादीनां च बहुमाननादिना स्वसमीहितकार्यसिद्धिर्भवति । अत्र राज स्थानीयः तीर्थङ्कराः प्रधानादिस्थानीयाः श्रीआचार्यादय इति, तत उत्थाय द्रव्यतो वपुषा भावतश्च शुद्धपरिणामेन चारित्राचारविशुद्ध्यर्थं "करेमि भंते सामाइयं" इत्यादि सूत्रं पठित्वा प्रलम्बितभुज कूर्परधृतनाभ्यधोवर्ति जानूर्ध्वचतुरङ्गुलस्थापितकटिपट्टः "संजय खलिणे य वायस कविट्ठेत्यादि" १९ दोषरहितं कायोत्सर्गं कुर्यात्। यदुक्तं हेतुगर्भे—सामाइअपुव्वमिच्छामि काउस्सग्गमिच्चाइ सुत्तं भणिअ पलंबिअभुअ कुप्परधरिअ परिहणओ ॥ १ ॥ इत्यस्मिन् कायोत्सर्गे च प्रातस्तनप्रतिलेखनायाः प्रभृति दिवसातिचारान् चिन्तयति, मनसा प्रधारयेच्च "सयणासणण्णपाणे" त्यादिगाथा अचिन्तयत। श्राद्धस्तु आजुका चउपहर दिवसमांहि जिके जीव विराध्या हुवइ" इत्यादि अतिचारान् श्रीतरुणप्रभसूरिलिखितान् चिन्तयति। तदनागमने गच्छप्रवृत्त्या अष्टौ नमस्काराश्चिन्तयति, एतदतिचारचिन्तनं मनसा संकथनं च श्रीगुरुसमक्षमालोचनार्थं

गाथा पठति, ततः शक्रस्तव जावंति चेइआइंति गाथाद्विकवर्जं कथयित्वा देवान् वन्दते, अन्यगच्छे तु जयति सुयणस्थाने नमस्कारा एव कथ्यन्ते, श्रीखरतरगच्छे तु नवाङ्गीवृत्तिकारकस्तम्भनकपार्श्वनाथप्रकटक–श्रीअभयदेवसूरिस्वगच्छीयत्वेन तत्कृतेस्तु तेषां सातिशयत्वाच्च सुतरां प्रतिक्रमणप्रारम्भे आदेयता, अत्र च आवश्यकप्रारम्भे साधुः श्रावकश्चादौ देव-गुरुवन्दनं विदधे, यतः सर्वमप्यनुष्ठानं श्रीदेवगुरुवन्दनविनयबहुमानादिभक्तिपूर्वकं सफलं भवतीत्याह च—

"विणया हीणा विज्जा, दींति फलं इह परे अ लोगंमि । न फलंति विणयहीणा, सस्साणिव तो अहीणाणि ॥ १ ॥ भत्तीइ जिनवराणं, खिज्जंति पुव्वसंचिअं कम्मं । आयरिय नमुक्कारेण विज्जमंता य सिज्झंति ॥ २ ॥" अत एवं देववन्दने द्वादशाधिकारा ज्ञेयाः । यदुक्तं श्रीचैत्यवन्दनकभाष्ये (४ पत्रे)—"पढमहिगारे वंदे भावजिणे १ बीअए य दव्वजिणे २ इगचेइअ ठवणजिणे तइय ३ चउत्थंमि नामजिणे ४ ॥ १ ॥ तिहुअणठवणजिणे पुण, पंचमए ५ विहरमाणजिण छट्ठे ६ सत्तमए सुअनाणं ७ अट्ठमए सव्वसिद्धथुई ८ ॥ २ ॥ तित्थाहिववीरथुई नवमे ९ दसमेअ उज्जयंतथुई १० । अट्ठावय इगदिसि ११, सुदिट्ठि–सुरसमरणा चरमे ॥ १२ ॥ ३ ॥ अथाऽधिकारप्रथमपदानि द्वादश यथा—

"नमु १ जे अइ २ अरिह ३ लोगे ४ सव्व ५ पुक्ख ६ तम ७ सिद्ध ८ जो देवा ९ उज्जिं १० चत्ता ११ वेआवच्चग १२ अहिगार पढमपया ॥ १ इति ततो वंदित्तु चेइआइं, दाउ चउराइए खमासमणो । भूनिहिअसिरो सयला–इ आरभिच्चुक्कडं देइ ॥ १ ॥" इति श्रीजिनवल्लभसूरिवचनात् चतुरादिक्षमाश्रमणैः श्रीगुरु वन्दते, इति हेतुगर्भसम्मत्या च क्षमाश्रमणचतु-ष्टयेन प्रतिक्रमणं स्थापयन्ति, क्षमाश्रमणचतुष्टयदानानुक्रमश्च श्रीतरुणप्रभसूरिकृतबालावबोधे एव तथाहि–प्रथमक्षमा-

इम मुहणंतगपडिलेहणाइ कमसो विचिंतिज्जा ॥ २ ॥ हासो १ रई अ २ अरई ३, भय ४ सोग ५ दुगंछाय ६ वज्जिज्जा । भुअजुअल पेहंतो, सीसो सुपसत्थलेसतिग ९ ॥ ३ ॥ गारवतिग च वयणे १२, उरिसल्लतिग १५ कसायचउपिट्ठे (सवे) १९ । पयजुगिछजीववहं २५, तणुपेहाए विजाणमिण ॥ ४ ॥ जइ वि पडिलेहणाए, हेऊ जिअरक्खण जिणाणाय । तहवि इम मणमक्कडनिज तणत्थ मुणी चिंति ॥ ५ ॥" इत्यत्र सामायिके "साविआ पुण पिट्ठि ४ सिर ७ हियय १० वज्ज पनरस कुणइ" इति विधिप्रपाया श्रीजिनप्रभसूरिवचनात् श्राविका देहस्य पञ्चदशैव प्रतिलेखना करोति, तदनु वन्दनके दद्यात् वन्दनक च द्वात्रिंशद्दोषरहितं पञ्चविंशत्यावश्यकविशुद्ध च विधेय, एतद् वन्दनक च कायोत्सर्गातिचारालोचनार्थं एव विधिना वन्दन प्रदाय, सम्यगवनताङ्ग पूर्वं कायोत्सर्गे स्वमनोवधारितान् दैवसिकातिचारान् इच्छाकारेण "सदिसह भगवन् देवसिअ आलोएमि" इत्यादि सूत्र चारित्रविशुद्धिहेतुक उच्चारयन् श्रीगुरुसमक्षमालोचयेत्, आह च—श्रीजिनवल्लभसूरिभिः तथैव उक्तत्वात् ॥

"अह सम्ममवणयंगो करजुअविहिधरिअपोत्तिरयहरणो । परिचिंतिय अइआरे, जहक्कम गुरुपुरो विअडे ॥ १४ ॥"

ततः तरुणप्रभसूरिवचनात् 'ठाणेकमणे' त्यादि कथयति साधुः, पौषधमध्ये श्रावकोऽप्येव दैवसिकातिचारालोचनानन्तर मनोवचनकायसकलातिचारसंग्राहक "सव्वस्सवि देवसिए" त्यादि पठेत् इच्छाकारेण सदिसह इत्यनेन अन्तरालोचितातिचार प्रायश्चित्तं च मार्गयेत् गुरुवचश्च "पडिक्कमह" इति प्रतिक्रमणरूप प्रायश्चित्तमुपदिशन्ति, इद च—

"आलोयण १ पडिक्कमणे २, मिस ३ विवेगे ४ तहा वि उस्सग्गे ५ । तव ६ छेअ ७ मूल ८ अणवट्ठाया अ ९ पार

अन्यथा तत् सम्यक् न स्यात्, लोकेऽपि हि राजादीनां किमपि विज्ञाप्य मनसा सम्प्रधार्य कागदादौ लिखित्वा विज्ञप्यते, ततश्च नमस्कारपूर्वं कायोत्सर्गं पारयित्वा चतुर्विंशतिस्तवं पठेत् आह च—

"काउस्सग्गंमि ठिओ, नीरेयकाओ निरुद्धवयपसरो। जाणइ सुहमेगमणो, [ मुणि ] पुण देवसिआइ अइयारं ॥ १ ॥ परिजाणिऊण य तओ, सम्मं गुरुजणपगासणेण तु। सो होइ अप्पगसो, जम्हा य जिणेहिं सो भणिउ ॥ २ ॥ काउस्सग्गं मुक्खपहं देसिअं जाणिऊण तो धीरो। दिवसाइआरं जाणण, ठाए ठायंति उस्सग्गो ॥ ३ ॥ सयणासणन्नपाणे, चेइअ जइसज्झकायउच्चारे। समिई भावणगुत्ती, वि तहायरणे अ अइयारो ॥ ४ ॥ गोसमुहणंतगाई, आलोए देसिएअ अइयारे। सधे समाणइत्ताहि अणदोसे ठविआहि ॥ ५ ॥ काउ हि अप्पदोसे, जहक्कम जानता व पारिंति। ताए सुहुमाण पाणू, धम्मं सुक्कं च झाइज्जा ॥ ६ ॥ इति हेतुगर्भे। ननु-ज्ञानादिषु सत्सु प्रथमं चारित्राचारकायोत्सर्गः कथं क्रियते ? उच्यते-ज्ञानादेश्चारित्रस्य गरिष्ठत्वज्ञापनार्थं आह च-"जम्हा दंसणनाणा, संपुन्नफलं न दिंति पत्तेअं। चारित्तजुआ दिंति, अविस्सिस्सए तेण चारित्तं ॥ १ ॥ इति ततश्च जानुपाश्चात्यभागपिण्डिकादि प्रमृज्य उपविश्य च श्रीगुरूणा वन्दनकदानार्थं मुखवस्त्रिकां कायं च द्वावपि प्रत्येकं पञ्चविंशतिधा प्रतिलिखेत्। यदाह-"संडासगे पमज्जिय, उववसिअ अलग्गविअमबाहु जुओ। मुहणंतयं च कायं, च पेहए पंचवीसं इह ॥ १ ॥" इति मुखवस्त्रिकाकायप्रतिलेखनाया मनसः स्थिरीकरणार्थमेव चिन्तयेत्, यदुक्तं हेतुगर्भे—"सुत्तत्थतत्तदिट्ठी १, दंसणमोहतिअगं च ४ रागतिगं ७। देवाइ तत्तति अगं १०, तहा अदेवाइ तत्ततिगं १३ ॥ १ ॥ नाणाइ तिगं १६ तह तविराहणा १९ त्रिग्निगुत्ति २२ दंडतिअं २५।

चारविशुद्धिहेतु कायोत्सर्गं च पारयित्वा दर्शनाचारविशुद्ध्यर्थं चतुर्विंशतिस्तव पठेत्, ततः "सव्वलोए अरिहंतचेइआण" इत्यादि सूत्र च पठित्वा तदर्थमेव कायोत्सर्गमेकचतुर्विंशतिस्तवचिन्तनरूप कुर्यात्, त च तथैव पारयित्वा श्रुतज्ञानाचारविशुद्ध्यर्थं 'पुक्खरवरदीवड्ढे' इत्यादि सूत्र "सुअस्स भगवओ करेमि काउस्सग्ग" इत्यादि च पठित्वा एकचतुर्विंशतिस्तवचिन्तनरूप कायोत्सर्गं कुर्यात्, पारयित्वा च ज्ञान–दर्शन–चारित्राचारनिरतिचरणसमाचरणफलभूताना सिद्धाना, "सिद्धाण बुद्धाणं" इति सिद्धस्तव पठति। आह च—

"विहिणा पारिअ सम्मत्तसुद्धिहेउ च पढिअउज्जोअ। तह सव्वलोअअरिहं–तचेइआरोहणुस्सग्ग ॥ १८ ॥ काउ उज्जोयगर, चिंतिय पारेइ सुद्धसम्मत्तो। पुक्खरवरदीवड्ढ, कड्ढइ सुयसोहणनिमित्त ॥ १९ ॥ पुण पणवीसोस्सास, उस्सग्गं कुणइ पारए विहिणा। तो सयलकुसलकिरिआ, फलाणसिद्धाण पढइ थय ॥ २० ॥" इह चतुर्विंशतिस्तवद्वयचिन्तनरूपो द्वितीयश्चारित्रविशुद्धिहेतुकः कायोत्सर्गं अस्मिश्च पूर्वोक्तयुक्त्या चारित्राचारस्य ज्ञानाद्याचारेभ्यो वैशिष्ट्यादिना चतुर्विंशतिस्तवद्वयचिन्तन समाप्यते, नाऽनेतनयोः तृतीयो दर्शनाचारविशुद्धिहेतुकः चतुर्थो ज्ञानाचारविशुद्धिहेतुः। आह च—

"नमुक्कार चउवीसग, किइकम्मालोयण पडिक्कमणं। किइकम्मपुरा लोइअ, दुण्पडिकते अ उस्सग्गो ॥ १ ॥ एस चरित्तुस्सग्गो, दसणसुद्धीइ तइअओ होई। सुअनाणस्स चउत्थो, सिद्धाणथुई अ किइकम्म ॥ २ ॥" दिवसातिचार चिन्तनार्थः प्रथमश्चारित्राचारहेतुः कायोत्सर्गो द्वितीयोऽपि चतुर्विंशतिस्तवद्वयचिन्तनरूप तद्धेतुरेव कायोत्सर्गः।

यात् प्रतिक्रमणमनुकुर्वंश्चिय पश्चात्पदैः अवग्रहात् बहिर्निःसृत्य 'आयरिय उवज्झाए' सूत्र पठति, अन्यगच्छेषु केषुचिद् 'आयरिय उवज्झाए' इत्यादि गाथात्रिक साधवोऽपि पठन्ति, न चैतत् संगतिमङ्गति, श्रीयोगशास्त्रवृत्तौ–हेतुगर्भे–श्रीजिनवल्लभसूरि–श्रीजिनपतिसूरिप्रमुखनिर्मितग्रन्थेषु सर्वत्र 'सड्ढो गाहातिग पढइ' इत्येव नामग्राह श्राद्धस्यैव एतत् पठनमुक्तत्वात् न साधोः, न च साध्य–श्राद्ध इति कोऽर्थः ?, श्रद्धावानिति व्युत्पत्त्या द्वयोरपि ग्रहण काऽपि ग्रन्थे, अत्राधिकारे एतदर्थकरणाऽदर्शनात्, नाऽपि च सर्वोऽपि प्रतिक्रमणसूत्रपाठो द्वयोरपि समान इति । सामायिकसूत्र–प्रतिक्रमणसूत्रादिषु द्वयोरपि भिन्नभिन्नपाठात् । विस्तरवार्तार्थिना अस्मिन्नेव ग्रन्थे पञ्चम प्रश्नोत्तर द्रष्टव्य, कायोत्सर्गे च चारित्राचारविशुद्ध्यर्थं चतुर्विंशतिस्तवद्वय चिन्तयति, आह च—

"इय सामाइयउस्सग्गसुत्तमुच्चरिअ काउस्सगठिओ । चिंतइ उज्जोअदुग, चरित्तअइयार शुद्धीए कए ॥ १७ ॥

इह चाऽऽह ननु–करेमि भंते सामाइयमिति सूत्रमादौ प्रतिक्रमणसूत्रकथनक्षणे द्वितीय तृतीय पुनरिह तदुच्चारण किमर्थं ? उच्यते–सर्वमपि धर्मानुष्ठान समतापरिणामे स्थितस्य सफल भवतीति, प्रतिक्रमणस्यादौ मध्येऽवसाने च पुन पुनस्तस्य स्मृत्यर्थं तदुच्चारण, आह च—

"आइमकाउस्सग्गे, पडिक्कमतो य काउ सामइय । तो किं करेइ बीअ, तइअ च पुणोवि उस्सग्गो ॥ १ ॥ समभावम्मि ठिअप्पा, उस्सग्ग करिअ तो पडिक्कमइ । एमेव य समभावे, ठिअस्स तइअ पि उस्सग्गो ॥ २ ॥ सज्झाय १ झाण २ तव ३ ओसहेसु ४ उवएस ५ थुइपयाणेसु ६ । सतगुणकित्तणेसु य ७, न हुति पुणरुत्तदोसा उ ॥ ३ ॥" इति चारित्रा-

मग्रे दास्यते, इत्यनेन दैवसिकप्रतिक्रमणं सपूर्णं जातं । अत्र प्रतिक्रमणे 'जयतिहुयण' कथने गच्छाचारेण आन्तरणीदोषो गण्यते, चैत्यवन्दन विना कायोत्सर्गं तद्दोषो न भवति, ततः 'सव्वस्सवि देवसिअ' कथनादारभ्य 'इच्छामो अणुसट्ठिं' यावदान्तरणीदोषो भवेत् ततः परं न स्यात्, सर्वमपि धर्मानुष्ठानं श्रीदेवगुरुभक्तिबहुमाननादिपुरःसरं सफलं भवतीति, प्रतिक्रमणस्य प्रारम्भे संपूर्णीभवने च श्रीदेवगुरुवन्दनं इति । आद्यन्तग्रहणेन मध्यस्याऽपि ग्रहणमिति न्यायेन तद्भक्तिः सार्वत्रिकी ज्ञेया, यथा शक्रस्तवे नमुत्थुणमित्यादौ, नमो जिणाणमिति अन्ते च नमो इत्यस्य स्थापनेन शक्रस्तवे प्रतिपदं तत्पाठज्ञापनं, ततः 'कुणइ पच्छित्तउस्सग्गमिति' श्रीजिनवल्लभसूरिविरचितप्रतिक्रमणसामाचारीवचनप्रामाण्यात् चतुर्थक्षमाश्रमणदानपूर्वं इच्छाकारेण संदिसह भगवन् 'देवसिअपायच्छित्तविसोहणत्थं' करेमि काउस्सग्गमिति, श्रीतरुणप्रभसूरिवचसा अन्नत्थूससिएणमि त्यादि भणित्वा कायोत्सर्गं कुर्यात्, तन्मध्ये चतुश्चतुर्विंशतिस्तवचिन्तनं कुर्यात्, पारिते चैकं चतुर्विंशतिस्तवं मङ्गलार्थं पठेत्, हेतुगर्भेऽप्युक्तं, पूर्वं प्रतिक्रमणे चारित्रदर्शनज्ञानाचारशुद्ध्यर्थं कायोत्सर्गेषु कृतेष्वपि पुनरिह 'द्विर्बद्धं सुबद्धं' भवतीति न्यायेन प्राणातिपातादिविरमणातिचारविशुद्ध्यर्थं चतुर्थं चतुश्चतुर्विंशतिस्तवचिन्तनरूपं दैवसिकप्रायश्चित्तविशुद्ध्यर्थं कायोत्सर्गं कुरुते, उक्तं च—

"गुरुथुइगहणे थुइ तिन्नि वद्धमाणक्खरस्सरो पढइ । सक्कत्थय थयं पढिअ कुणइ पच्छित्तउस्सग्गं ॥ २४ ॥

पाणवह मुसावाए, अदत्तमेहुणपरिग्गहे चेव । सयमेगं तु अणूणं, उस्सासाणं हविज्जाहिं ॥ २ ॥"

अथ च कायोत्सर्गः कैश्चित् सामाचारीवशेन प्रतिक्रमणस्य अन्ते क्रियते । कैश्चित्तु आदौ एव क्रियते, श्रीखरतरगच्छी-

"बालस्त्रीमन्दमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ १ ॥"

इत्याद्युक्तिभिः स्त्रीणां संस्कृतेऽनधिकारित्वसूचनात्, नाटकादिष्वपि प्रायः स्त्र्यालापानां प्राकृतादिभाषयैव दर्शनात् साध्व्यः श्राविकाश्च नमोऽर्हत्सिद्धेत्यादि सूत्रं न पठन्ति, नमोऽस्तु वर्धमानेत्यादिस्थाने 'संसारदावानले' त्यादिरूपं स्तुतित्रयं च पठन्ति, यच्च श्रीगुरुकथनावसरे प्रतिस्तुतिप्रान्ते नमो खमासमणाणमिति गुरुनमस्कारः साधुसाध्व्यादिभिर्भण्यते । तत् नृपाद्या छास्येषु प्रतिवार्ता प्रान्ते जीवेत्यादि भणनवत् श्रीगुरुवचःप्रतीच्छादिरूपं संभाव्यते, इदं नमो खमासमणाणमिति पदं विधिप्रपा–तरुणप्रभबालावबोधादौ नाऽस्ति, परं हेतुगर्भेऽस्ति, तथेदं श्रीवर्धमानस्वामिनस्तीर्थं तस्याऽऽज्ञया चेदं प्रतिक्रमणाधिकरणं निर्विघ्नं च तत्संपूर्णीभवने हर्षेण मङ्गलार्थं च श्रीवर्धमानस्तुतिपाठोऽयं कृतज्ञानां व्यवहारो यत्स्वसमीहितशुभकार्यनिर्विघ्नभवने श्रीगुरुदेवबहुमाननादिवर्धमानस्वरेण स्तुतित्रयपाठश्च हर्षातिरेकादयं च न्यायो लोकेऽपि दृश्यते, यथा राज्ञः शत्रुजयादौ विवाहादौ वा हर्षेण विचित्रवादित्रवादनोच्चैःस्वरगीतगाननृपपूजनादि', स्तुतित्रयपाठानन्तरं शक्रस्तवपाठः, ततो गुर्वाज्ञया एकः श्राद्धो यतिर्वा इच्छाकारेण संदिसह भगवन् स्तोत्रभणु ? इति क्षमाश्रमणदानपूर्वकमधुरस्वरेण सद्भूतगुणगर्भितश्लोकाद्येकादशकादारभ्य अष्टोत्तरशतं यावत् श्रीवीतरागस्य बृहत्स्तवनं पठति, अन्ये तु जानुस्था स्थित्वा सावधानमनसः कृताञ्जलिपुटाः शृण्वन्ति । ततः संपूर्णस्तोत्रकथनानन्तरं चतुर्भिः क्षमाश्रमणैः श्रीगुर्वादीन् वन्दते इति श्रीहेतुगर्भवचनप्रामाण्यात्, क्षमाश्रमणचतुष्टयं दत्ते श्रीतरुणप्रभसूरिबालावबोधानुक्रमेण स चाऽयं प्रथम० क्ष० श्रीआचार्यमिश्र १ द्वितीयक्षमाश्रमण० श्रीउपाध्यायमिश्र २ तृतीयक्षमाश्रमण० सर्वसाधु ३ चतुर्थक्षमाश्रमण-

येस्तु प्रतिक्रमणप्रान्ते क्रियते, तथा श्रीजिनवल्लभसूरिणा प्रतिक्रमणसामाचार्यां श्रीजिनप्रभसूरिणा च विधिप्रपायां देवसिकप्रतिक्रमणं देवसिकप्रायश्चित्तकायोत्सर्गपर्यन्तमेव लिखितं, तदानीं तत्प्रमाणस्य एव करणात्। अथ श्रीतरुणप्रभसूरिकृतषडावश्यकबालावबोधे प्रान्ततोऽग्रेतनः प्रतिक्रमणानुक्रमेण अनुक्रमो लिख्यते, तथाहि–ततो गीतार्थाऽऽचारणावशेन "इच्छाकारेण संदिसह भगवन् खुद्दोवद्दवओहडावणत्थं करेमि काउस्सग्गं अन्नत्थूससिएणं" इत्यादि भणित्वा कायोत्सर्गं करोति, तत्र चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारिते चैकं चतुर्विंशतिस्तवं पठेत्, ततो जानुभ्यां स्थित्वा साधुः पौषधकः श्रावकश्च "सज्झाय संदिस्सावेमि सज्झायं करेमि" इति भणित्वा नमस्काराणां त्रयं पञ्चकं वा कथयेत्। ततः श्रीपार्श्वनाथसंबन्धि स्तोत्रं कथयेत्, ततः शक्रस्तवः "जावंति चेइआइं" इत्यादि भणित्वा क्षमाश्रमणदानपूर्वं 'जावंत केवि साहू नमोऽर्हत् सिद्धे'त्यादिकथनपूर्वकं श्रीपार्श्वनाथलघुस्तवनं भणित्वा जयवीरायेति पठति, ततो भूतलन्यस्तमस्तको मुखे मुखवस्त्रिकां दत्त्वा "सिरि–थंभणयट्ठियपाससामिणो" इत्यादि गाथायुगलं 'वंदणवत्तिआए' इत्याद्युक्तिपूर्वं कायोत्सर्गं कुर्यात्, तन्मध्ये चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारिते चैकश्चतुर्विंशतिस्तवः। ततः क्षमाश्रमणदानेन "भट्टारकश्रीजिनदत्तसूरि–आराधनानिमित्तं करेमि काउस्सग्गं" इत्याद्युक्तिपूर्वं चतुर्विंशतिस्तवचतुष्टयकायोत्सर्गं करोति, पारिते चैकं, अस्मिन् देवसिकप्रतिक्रमणे विना पदस्थसाधुं सर्वैरेकीभूय प्रतिक्रमणं स्थापनीयं। अथ कदापि कोऽपि श्राद्धादिः पश्चादापतति, तदा न शुद्ध्यति तस्य तैः समं प्रतिक्रमणकरणं किंतु स तेभ्यः पृथग् भूत्वा करोति, प्रतिक्रमणं च मुख्यसाधुर्यदि वाचनाचार्यादिपदस्थो भवति, तदा आगमिकसाधुसमं ...

भवनवशात् देवा न वन्दिताः तदाऽपवादमार्गेण बृहत्स्तोत्रकथनसमये स वन्दते इति स्वगच्छप्रवृत्तिर्दृश्यते, परं विचार्यमाणा न तादृक्।

ननु-प्रतिक्रमण पञ्चविधाचारशुद्धिनिमित्त क्रियते, यदुक्त—

"पञ्चविहायारविसुद्धिहेउमिह साहु सावगो वा वि। पडिक्कमणं सह गुरुणा, गुरुविरहे कुणइ इक्कोवि ॥ १ ॥"

तत्र पञ्चविधाचारे कस्याऽऽचारस्य प्रतिक्रमणे केन सूत्रेण शुद्धिः स्यात्? इति, उच्यते–प्रतिक्रमणशब्द आवश्यकविशेषवाच्यपि अत्र सामान्ये आवश्यके रूढत्वावाऽऽवश्यक षडध्ययनात्मकं तानि चाऽमूनि "सामाइय चउवीसंत्थउ वदणय पडिक्कमण काउस्सग्गो पच्चक्खाणंति" एतेषा च षण्णां अधिकारा अमी यथाक्रमम्—

सावज्जजोगविरइ, १ उक्कित्तण २ गुणवओ–अपडिवत्ति ३। खलिअस्स निंदणा ४ य विगिच्छा ५ गुणधारणा ६ चेव ॥ १ ॥

तत्र सामायिकेन चारित्राचारस्य शुद्धिः क्रियते १ चतुर्विंशतिस्तवेन दर्शनाचारस्य २ वन्दनकेन ज्ञानाद्याचाराणा ३ प्रतिक्रमणेन तेषामतिचाराऽपनयनरूपा ४ प्रतिक्रमणेनाऽशुद्धाना तदतिचाराणा कायोत्सर्गेण ५ तप आचारस्य प्रत्याख्यानेन ६ वीर्याचारस्य एभिः सर्वैरपि। उक्त च—

"चरित्तस्स विसोही, कीरइ सामाइयेण किल इह य। सावज्जे आरजोगाण वज्जणा सेवणत्तणउ ॥ १ ॥" दसणयारविसोही, चउवीसाइत्थ एण किज्जइ अ। अच्चुब्भयगुणकित्तण, रूवेणं जिणवरिंदाणं ॥ २ ॥ नाणाईआ उ गुणा, तस्स प्पसपडिवत्तिकरणाओ। वंदणएण विहिणा, कीरइ सोही अ तेसिं तु ॥ ३ ॥ खलिअस्स य तेसिं पुणो, विहिणा ज निंद-

येस्तु प्रतिक्रमणप्रान्ते क्रियते, तथा श्रीजिनवल्लभसूरिणा प्रतिक्रमणसामाचार्यां श्रीजिनप्रभसूरिणा च विधिप्रपाया देवसिकप्रतिक्रमणं दैवसिकप्रायश्चित्तकायोत्सर्गपर्यन्तमेव लिखित, तदानीं तत्प्रमाणस्य एव करणात्। अथ श्रीतरुणप्रभसूरिकृतषडावश्यकबालावबोधे प्रान्ततोऽमेतनः प्रतिक्रमणानुक्रमेण अनुक्रमो लिख्यते, तथाहि—ततो गीतार्थाऽऽचारणावशेन "इच्छाकारेण संदिसह भगवन् खुद्दोवद्दवओहडावणत्थं करेमि काउस्सग्गं अन्नत्थूससिएणं" इत्यादि भणित्वा कायोत्सर्गं करोति, तत्र चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारिते चैकं चतुर्विंशतिस्तवं पठेत्, ततो जानुभ्यां स्थित्वा साधु पौषधकः श्रावकश्च "सज्झायं संदिसावेमि सज्झायं करेमि" इति भणित्वा नमस्काराणां त्रयं पञ्चकं वा कथयेत्। ततः श्रीपार्श्वनाथसंबन्धि स्तोत्रं कथयेत्, ततः शक्रस्तवं "जावंति चेइआइं" इत्यादि भणित्वा क्षमाश्रमणदानपूर्वं 'जावंत केवि साहू नमोऽर्हत् सिद्धे'त्यादिकथनपूर्वकं श्रीपार्श्वनाथलघुस्तवनं भणित्वा जयवीरायेति पठति, ततो भूतलन्यस्तमस्तको मुखे मुखवस्त्रिकां दत्त्वा "सिरि-थंभणयट्ठियपाससामिणो" इत्यादि गाथायुगलं 'वंदणवत्तिआए' इत्याद्युक्तिपूर्वं कायोत्सर्गं कुर्यात्, तन्मध्ये चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारिते चैकश्चतुर्विंशतिस्तवः। ततः क्षमाश्रमणदानेन "भट्टारकश्रीजिनदत्तसूरि-आराधनानिमित्तं करेमि काउस्सग्गं" इत्याद्युक्तिपूर्वं चतुर्विंशतिस्तवचतुष्टयकायोत्सर्गं करोति, पारिते चैकं, अस्मिन् देवसिकप्रतिक्रमणं विना पदस्थसाधु सर्वैरेकीभूय प्रतिक्रमणं स्थापनीयं। अथ कदापि कोऽपि श्राद्धादिः पश्चादापतति, तदा न शुध्यति तस्य तैः समं प्रतिक्रमणकरणं किंतु स तेभ्यः पृथग् भूत्वा करोति, प्रतिक्रमणं अथ मुख्यसाधुर्यदि वाचनाचार्यादिपदस्थो भवति, तदा आप्रतिक्रमणसूत्रं यावत् पश्चादप्यापतति। अथ केनाऽपि चस्सूरत्वा

दर्शनज्ञानातिचारविशुद्ध्यर्थं कायोत्सर्गत्रयं करोति, प्रथमकायोत्सर्गे एकं चतुर्विंशतिस्तवं चिन्तयति, द्वितीयेऽप्येकं 'साय सयं गोसद्धं ति' वचनात् चिन्तयति, 'साये'ति अत्र अनुस्वारलोपः प्राकृतत्वात् कृतः। ततः साय—सन्ध्याया, प्रतिक्रमणे शतं पादाना, तत्र श्लोकस्य चतुष्पादरूपत्वात् पञ्चविंशतिश्लोकानां चतुर्भिर्गुणने शतं पादाना भवति। 'गोसे' ति प्राभातिकोद्द्योतकरद्वये अर्धं शतस्य भवति, पादानां पञ्चाशदित्यर्थः। इति श्रीप्रवचनसारोद्धारे ( ४१ पत्रे ) १८५ गाथावृत्तौ। तृतीये तु निशातिचारान् चिन्तयति, इह पूर्वोक्तयुक्त्या चारित्रातिचारस्य ज्ञानाद्याचारेभ्यो वैशिष्ट्येऽपि यदेकस्यैव चतुर्विंशतिस्तवनचिन्तनं तद्रात्रौ प्रायोऽल्पव्यापारत्वेन चारित्रातिचाराणां स्वल्पत्वादिना सभाव्यते। ततः कायोत्सर्गं पारयित्वा सिद्धस्तवं पठित्वा संडासकप्रमार्जनपूर्वं उपविशति, उक्तं च—

"उद्धिय करेइ विहिणा, उस्सग्गं चिंतए अ उज्जोअं। बीअं दंसणसुद्धीए चिंतए तत्थवि तमेव ॥ २६ ॥
तइए वि निसाइआरे, जहक्कम चिंतिऊण पारेइ। सिद्धत्थयं पढित्ता, पमज्ज संडासमुवविसइ ॥ २७ ॥"

ननु—प्रथमे चारित्राचारविशुद्धिकायोत्सर्गे निशातिचारचिन्तनं कस्मान्न क्रियते? उच्यते—'निद्दामत्तो न सरइ' इत्यादि हेतुभिः, उक्तं च—

"एत्थ पढमो चरित्ते, दंसणसुद्धीए बीअओ होइ। सुअनाणस्स अ तइओ, नवरं चिंतंति अ तत्थ इमं ॥१५२९॥" तइए निसाइयार" इत्यादि ततः पूर्वं च मुखवस्त्रिकादिप्रतिलेखनापूर्वं वन्दनकदानादिविधिं विधत्ते तावत् यावत् प्रतिक्रमणसूत्रानन्तरः कायोत्सर्गः। उक्तं च—"पुत्तिं च पोत्तिपेहण, वंदणमालो अ सुत्तपढणं च। वंदणखामणवंदण, गाहातिगपढणमु-

णाइ परिकमणं । तेण पडिक्कमणेणं, तेसिं पि कीरई सोही ॥ ४ ॥ चरणाइआयाण, जहक्कम वणविगच्छरूवेण । पडि-
क्कमणा सुद्धाण, सोही तह काउसग्गेण ॥ ५ ॥ गुणधारणरूवेण, पच्चक्खाणेण तवइआरस्स । विरियायारस्स पुणो,
सव्वे हि वि कीरए सोही ॥ ६ ॥" इति देवसिक प्रतिक्रमण सहेतुक स्वसामाचारीक संपूर्ण ॥ १ ॥

इदानीं रात्रिप्रतिक्रमणानुक्रमः कोऽप्युच्यते, तथाहि–पाश्चात्यनिशायामे निद्रां परित्यज्य ईर्यापथिकीं प्रतिक्रम्य क्षमाश्रमणदानपूर्वं "कुसुमिण दुसुमिण राइपायच्छित्तविसोहणत्थं करेमि काउस्सग्गमि"त्यादि भणित्वा चतुर्विंशतिस्तवचतुष्कचिन्तनरूपं कायोत्सर्गं कुर्यात्, श्रावकस्तु सामायिकोच्चारपूर्वकं कायोत्सर्गं करोति, एष च कायोत्सर्गो देवसिकप्रायश्चित्तविशोधनार्थं च संभाव्यते । इह च सर्वं श्रीदेवगुरुवन्दनपूर्वं सफलमिति चैत्यवन्दनां विधाय स्वाध्यायकायोत्सर्गादिधर्मव्यापारं विधत्ते, यावत्प्राभातिकप्रतिक्रमणवेला, तदनु चतुरादिक्षमाश्रमणैः प्रतिक्रमणं स्थापयति, क्षमाश्रमणचतुष्टय श्रीतरुणप्रभसूरिवचनप्रामाण्यात्, एव प्रथमक्षमाश्रमणेन श्रीआचार्यमिश्र १ द्वितीय क्ष० श्रीउपाध्यायमिश्र २ तृतीय क्ष० वर्तमानगुरु श्रीअमुकसूरि ३ चतुर्थ क्ष० सर्वसाधु, ततो भूतलन्यस्तमस्तको मुखे मुखवस्त्रिका दत्त्वा 'सव्वस्सवि राइये'त्यादिसूत्र सकलरात्रिकाऽतिचारबीजकभूतं भणति, अत्राऽधिकारे 'इच्छाकारेण संदिसहे'ति पद न वाच्य, ततः शक्रस्तव पठति, उक्तं च–

"एव ता देवसिअ, राइअमवि एवमेव नवरि तहिं । पढम दाउं मिच्छामि दुक्कड पढइ सक्कथय ॥ १ ॥"

इह च शक्रस्तवपाठेन संक्षेपदेववन्दन पूर्व कृतवन्दनत्वेऽपि श्रीदेवभक्तिः सर्वत्र कार्या इति स्मरणार्थं इत्यादि कारणानि यथाऽऽगम स्वय भाव्यानि, ततो द्रव्यतो भावतश्च उत्थाय 'करेमि भंते सामाइयमि' त्यादि सूत्रपाठपूर्वं चारित्र-

॥ ४८ ॥ पडिक्कमित्तु निस्सल्लो, वदित्ताण तओ गुरु । काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४९ ॥ किं तव पडिवज्जामि ?, एव तत्थ विचिंतए । काउस्सग्ग तु पारित्ता, करिज्जा जिणसथव ॥ ५० ॥ पारियकाउस्सग्गो, वदित्ताण तओ गुरु । तव सपडिवज्जित्ता, करिज्ज सिद्धाण संथव ॥ ५१ ॥ पारिअकाउस्सग्गो वदिताण । तओ गुरु सपडिवज्जित्ता करिज्ज सिद्धाण सथव ॥ ५१ ॥" इति ॥

अथ पाक्षिक–चातुर्मासिक–सावत्सरिक–प्रतिक्रमणानुक्रमः कथ्यते, तत्र पाक्षिकप्रतिक्रमणमाचरणा चतुर्दश्या—तत्र साधवः सूक्ष्मबादरातिचारजातस्य विशोधनार्थं सदा दिवसनिशावसानेषु प्रतिक्रमण विदधाना अपि पक्षचतुर्माससवत्सरेषु विशेषेण प्रतिक्रमण कुर्वन्ति, उत्तरकरणविधानार्थं, तथाहि–यथा कश्चित् तैलादिभिः कृतवपु सस्कारोऽपि धूपविलेपनभूषणादिभि उत्तरकरण विधत्ते, तथा साधवोऽपि शुद्धिविशेष कुर्वन्तीति । किं वा "जह गेह पइदिवस, पि सोहिओ तह वि पक्खसधीसु । सोहिज्जइ सविसेस, एव इहय पि नायव्व ॥ १ ॥" तथा नित्यप्रतिक्रमणे कश्चिदतिचारो विस्मृतः स्यात् स्मृतो वा भयादिना गुरुसमक्ष न प्रतिक्रान्त स्यात् परिणाममान्द्याद् असम्यक् प्रतिक्रान्तोच्चारणाद् अतः पाक्षिकादिषु त प्रतिक्रामन्ति । तत्र पाक्षिके पूर्ववत् दैवसिक प्रतिक्रमणसूत्रान्त श्रीतरुणप्रभसूरिवचनेन "वदामि जिणे चउवीसमि" ति पर्यन्त भणित्वा प्रथमक्षमाश्रमणेन इच्छाकारेण "सदिसह भगवन् पक्खियमुहपत्तिं पडिलेहेमि, चतुर्मासिके चउमासी मु०, सवच्छरिए संवच्छरिय मु०" इत्युक्त्वा द्वितीयक्षमाश्रमण दत्त्वा मुखवस्त्रिका प्रतिलेख्य वन्दनक दत्ते । अत्रान्तरे वृद्धसाधुः वक्ति—"पुण्यवन्तो देवसिने" स्थानके पाक्षिक–चातुर्मासिक–सांवत्सरिक भणिज्यो छींक राखज्यो

तमेऽध्ययने कोऽपि स्वस्पः प्रतिक्रमणानुक्रमः (५४० पत्रे) प्रतिपादितो नाऽन्यत्र क्वाऽपि, तत्राऽपि साधुमुद्दिश्य न श्राद्ध। सांप्रत क्रियमाणप्रतिक्रमणानुक्रम इयान् विस्तर—कोऽपि पूर्वधरादिप्राक्तनसूरिविनिर्मितग्रन्थानुसारी कोऽपि च स्वगच्छसम्प्रदायगम्य। श्रीउत्तराध्ययने प्रतिक्रमणानुसारेण क्रम एव, तथाहि—

"पोरसिए चउब्भागे, वंदित्ता ण तओ गुरु। पडिक्कमित्ता कालस्स, सिज्ज तु पडिलेहए ॥ ३७॥ पासवणुच्चारभूमिं च, पडिलेहिज्ज जय जई। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ ३८॥ देसिय च अईयार, चिंतिज्ज अणुपुव्वसो। नाणंमि दसणे चेव, चरित्तमि तहेव य ॥ ३९॥ पारियकाउस्सग्गो, वंदित्ता य तओ गुरु। देसिअ तु अइयारं, आलोइज्ज जहक्कम ॥ ४०॥ पडिक्कमित्ताण निस्सल्लो, वंदित्ताण तओ गुरु। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ ४१॥ सिद्धाण संथवं किच्चा, वंदित्ताण तओ गुरु। थुईमंगल च काऊण, काल सपडिलेहए ॥ ४२॥"

इति दैवसिकप्रतिक्रमणानुक्रमः।

"पढमं पोरिसिं सज्झाय, बीअ झाणं झियायई। तईयाए निद्दमुक्ख तु, चउत्थी भुज्जोवि सज्झाय ॥ ४३ ॥ पोरिसीए चउत्थीए, काल तु पडिलेहए। सज्झाय तु तओ कुज्जा, अवोहतो असजए ॥ ४४॥ पोरिसीए चउब्भाए, वंदित्ता ण तओ गुरु। पडिक्कमित्तु कालस्स, काल तु पडिलेहए ॥ ४५॥ आगए कायवुस्सग्गे, सव्वदुक्खविमुक्खणे। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४६॥ राईय च अईयार, चिंतिज्ज अणुपुव्वसो। नाणमि दसणमि अ, चरित्तंमि तवमि अ ॥ ४७॥ पारिअकाउस्सग्गो, वंदित्ताण तओ गुरु। राईय तु अईयारं, आलोइज्ज जहक्कमं

मणेण अब्भुट्ठिओमि अब्भिंतर पक्खिय—चउम्मासिअं—संवच्छरिअं वा खामेमि" इत्यादि, ततो वन्दनकद्वय ददाति, ततो
"देवसिअं आलोइअ पडिकंतं पक्खिअं—चाउम्मासिअ—संवच्छरिअं वा पडिक्कमावेह" गुरुर्ब्रूते "सम्म पडिक्कमह त्ति ।" तत
इच्छमिति भणित्वा यः पाक्षिकसूत्र भणति स सामायिकसूत्र "इच्छामि पडिक्कमिउ जो मे पक्खिओ चउम्मासिओ
संवच्छरिओ अइयारो कओ" इत्यादि सूत्र भणित्वा एकक्षमाश्रमणेन "पक्खियसुत्त संदिसावेमि द्वि० क्षमा० पक्खियसुत्त
कड्ढेमि त्ति" भणित्वा नमस्कारत्रय पठित्वा पाक्षिकसूत्र पठति । ये च साधुश्रावका शृण्वन्ति ते तदा किं कुर्युरित्याह—
सामायिकसूत्र उत्सर्गसूत्र तस्सुत्तरीसूत्र च पठित्वा कायोत्सर्गं कुर्वन्ति, कायोत्सर्गकरणशक्त्यभावे उपविष्टा अपि
शृण्वन्ति, पर प्रान्ते सर्वेऽप्युत्थाय कायोत्सर्गं कुर्वन्ति । यदुक्त श्रीविधिप्रपाया, तथाहि—"वदण दाऊ भणइ देयसिअ आलो-
इअ पडिक्कत पक्खिय पडिक्कमावेह, तओ गुरुणा सम्म पडिक्कमहेति भणिय सामाइयसुत्त उस्सग्गसुत्त च भणिय समासम
णेण पक्खियसुत्त सदिसावेमि पुणो खमासमणेण पक्खियसुत्त कड्ढेमि त्ति भणित्वा नमुक्कारतिग कड्ढिय पक्खियसुत्त भणइ
जे य सुत्त सुणति ते उस्सग्गसुत्ताणतरं तस्सुत्तरीकरणेणं ति दडग कड्ढिय काउस्सग्गे ठति" इति । तरुणप्रभसूरिकृत-
बालावबोधे तु ये कायोत्सर्गं कृत्वा शृण्वन्ति तेषामयमेवाऽनुक्रम प्रोक्तोऽस्ति, अथ च यः सूत्र भणति तस्य कर्तव्य-
ताऽनुक्रमो न उक्तोऽस्ति । अथ ये श्राद्धाः श्रीगुरु विना प्रतिक्रामन्ति ते तु एव कुर्वन्ति, तथाहि—एकः श्रावकः श्रीस्था-
पनाचार्याग्रे समागत्य एकक्षमाश्रमणदानेन वक्ति इच्छाकारेण "सदिसह भगवन् सूत्र सदिसाहु" गुरुर्वक्ति "सदिसावेह"
पुनर्द्वि० क्ष० भगवन् सूत्रं कढु, गुरुर्वक्ति भणहे ति, तत इच्छमिति भणित्वा ऊर्ध्वीभूय हस्तद्वय सयोज्य मुखे मुखवस्त्रिका

मधुरस्वरे पडिक्कमज्जो, अन्ये भणन्ति तहत्ति, इदं वार्तिकवाक्यं गच्छप्रवृत्त्या कथ्यमानमस्ति, परं विधिप्रपातरुणप्रभसूरि-बालावबोधादौ लिखितं नाऽस्ति । ततः सबुद्धान् श्रीगुर्वादीन् क्षमयितुं क्षमाप्रधानं च सर्वमनुष्ठानं सफलमिति ज्ञापयितुं "संबुद्धा खामणेणं अब्भुट्ठिओहं अब्भिंतरपक्खियं खामेमि" चातुर्मासिकप्रतिक्रमणे "चाउम्मासिअं खामेमि" सांवत्सरिकप्रतिक्रमणे "संवच्छरिअं खामेमि" इति पाठमूर्ध्वस्थित एव मस्तके हस्तद्वयं निवेशयन् कथयित्वा ततो जानुभ्यां स्थित्वा भूतलन्यस्तमस्तको मुखे मुखवस्त्रिकां दत्त्वा पाक्षिकप्रतिक्रमणे "पन्नरसण्हं राइंण"मित्यादि, चातुर्मासिकप्रतिक्रमणे "चउण्हं मासाणं"मित्यादि, सांवत्सरिकप्रतिक्रमणे "दुवालसण्हं मासाणं"मित्यादिपाठेन श्रीगुर्वादीन् क्षमयति। तत्र पाक्षिके त्रीन्, चातुर्मासिके पञ्च, सांवत्सरिके सप्त क्षामणकानि कार्याणि, परं त्रिषु अपि स्थानेषु साधुद्वयं शेषं रक्षणीयं । अत्र श्रीआवश्यकबृहद्वृत्तिः ( ७९४ पत्रे )—

"एवं सेसाणवि साहूण खामणावंदणं करेंति, अह विआलो वाघाओ वा ताहे सत्तण्हं पंचण्हं तिण्हं वा, पच्छा देवसिअं पडिक्कमंति" इति, ततः उत्थाय इच्छाकारेण "संदिसह भगवन् पक्खियं चउम्मासिअं संवच्छरिअं वा आलोएमि इच्छं आलोएमि जो मे पक्खिओ जो मे चउमासिओ जो मे संवच्छरिओ वा" इत्यादि सूत्रं भणित्वा संक्षेपेण विस्तरेण वा पाक्षिकान् चातुर्मासिकान् सांवत्सरिकान् वाऽतिचारानालोचयति "सव्वस्स वि पक्खिय चउम्मासिअ संवच्छरिअ" इत्यादि भणित्वा उपवासादिकं प्रायश्चित्तं प्रतिपद्यते, अत्र गच्छप्रवृत्त्या गुरुर्वक्ति—"चउत्थेण छट्ठेणं अट्ठमेण वा पडिक्कमह" इति ततो वन्दनकदानपूर्वकं प्रत्येकं क्षामणकानि कुरुते, तत्पाठस्तरुणप्रभसूरिणोक्तो यथा—"देवसिअआलोइअ पडिक्कंत प्रत्येकखा-

मणेण अब्भुट्ठिओमि अब्भिंतर पक्खिय—चउम्मासिअ—संवच्छरिअ वा खामेमि" इत्यादि, ततो वन्दनकद्वय ददाति, ततो "देवसिअं आलोइअ पडिक्कंत पक्खिअ—चाउम्मासिअ—संवच्छरिअ वा पडिक्कमावेह" गुरुर्ब्रूते "सम्मं पडिक्कमह त्ति।" तत इच्छमिति भणित्वा यः पाक्षिकसूत्र भणति स सामायिकसूत्र "इच्छामि पडिक्कमिउं जो मे पक्खिओ चउम्मासिओ संवच्छरिओ अइयारो कओ" इत्यादि सूत्र भणित्वा एकक्षमाश्रमणेन "पक्खियसुत्त संदिसावेमि द्वि० क्षमा० पक्खियसुत्त कड्ढेमि त्ति" भणित्वा नमस्कारत्रय पठित्वा पाक्षिकसूत्र पठति। ये च साधुश्रावका शृण्वन्ति ते तदा किं कुर्युरित्याह— सामायिकसूत्र उत्सर्गसूत्र तस्सुत्तरीसूत्र च पठित्वा कायोत्सर्गं कुर्वन्ति, कायोत्सर्गकरणशक्त्यभावे उपविष्टा अपि शृण्वन्ति, पर प्रान्ते सर्वेऽप्युत्थाय कायोत्सर्गं कुर्वन्ति। यदुक्त श्रीविधिप्रपाया, तथाहि—"वंदण दाउं भणइ देवसिअ आलोइअ पडिक्कंत पक्खिय पडिक्कमावेह, तओ गुरुणा सम्मं पडिक्कमहेति भणिय सामाइयसुत्त उस्सग्गसुत्त च भणिय खमासमणेण पक्खियसुत्त संदिसावेमि पुणो खमासमणेण पक्खियसुत्त कड्ढेमि त्ति भणित्वा नमुक्कारतिगं कड्ढिय पक्खियसुत्त भणइ जे य सुत्त सुणंति ते उस्सग्गसुत्ताणंतरं तस्सुत्तरीकरणेण ति दंडगं कड्ढिय काउस्सग्गे ठंति" इति। तरुणप्रभसूरिकृत-बालावबोधे तु ये कायोत्सर्गं कृत्वा शृण्वन्ति तेषामयमेवाऽनुक्रमः प्रोक्तोऽस्ति, अथ च यः सूत्र भणति तस्य कर्तव्यताऽनुक्रमो न उक्तोऽस्ति। अथ ये श्राद्धा श्रीगुरुं विना प्रतिक्रामन्ति ते तु एवं कुर्वन्ति, तथाहि—एक श्रावकः श्रीस्थापनाचार्याग्रे समागत्य एकक्षमाश्रमणदानेन वक्ति इच्छाकारेण "संदिसह भगवन् सूत्र संदिसाहुं" गुरुर्वक्ति "संदिसावेह" पुनर्द्वि० क्ष० भगवन् सूत्रं कड्ढु, गुरुर्वक्ति भणहे ति, तत इच्छमिति भणित्वा ऊर्ध्वीभूय हस्तद्वय संयोज्य मुखे मुखवस्त्रिका

चन्द्रादिबले सिद्धियोगे सति कल्पत्रेपोच्चारणा-

वारे बृहस्पतिवारे वा भरण्यादिवर्जिते चतुष्पादके नक्षत्रे मुख्यविहारिसाधो मुखवस्त्रिका प्रतिलेख्य वन्दनकद्वय च दत्त्वा

नन्तर मध्याह्नात् परतः सायतनप्रतिक्रमणानन्तर वा ईर्यापथिकीं प्रतिक्रम्य काउस्सग्गं करु इच्छ सज्झाय उक्खिव-

प्रथमक्षमाश्रमणेन "सज्झाय उक्खिवऊ" द्वितीयक्षमाश्रमणेन "सज्झाय उक्खिवणत्थं सागरवरगभीरापर्यन्तं लोकोद्द्योतकर चिन्त-

गत्थं करेमि काउस्सग्ग अन्नत्थ०" इत्यादि कथनपूर्व कायोत्सर्ग कृत्वा तत्र "असज्झाय–उहडावणत्थ" कायोत्सर्गः क्रियते, तत्र लोको-

यित्वा पारिते च सपूर्णः कथ्यते १। पुनः क्षमाश्रमणदानपूर्व "खुद्दोवद्दवउहडावणत्थ" कायोत्सर्ग कृत्वा लोको

द्द्योतकरचतुष्टय चिन्त्यते, पारिते च सपूर्णः २। पुनः क्षमाश्रमणपूर्व शक्रादिसमस्तवेयावच्चगरदेवतानिमित्त कायोत्सर्गः

द्द्योतकरचतुष्टय चिन्तयित्वा पारिते सपूर्णः ३। पुनः क्षमाश्रमणदानपूर्व सपूर्णमेक कथयित्वा, क्षमाश्रमणदानपूर्व "सज्झाय सदिसा-

क्रियते तत्राऽपि लोकोद्द्योतकरचतुष्टय चिन्तयित्वा पारिते स्वाध्याय क्रियते, तत्र नमस्कारत्रयपूर्व "धम्मो-

वेमि सज्झायं करेमि निसीहिआए मत्थएण वदामि" इत्युक्ते पूर्वमुपविश्य स्वाध्याय कर्तव्य । ततोऽनुज्येष्ठ साधुभि प्रत्येक वन्दना

मगलमुक्किट्ठमि"त्यादि षड्जीवनिकायाध्ययन यावत् मधुरस्वरेण "सिद्धाव भणओ भणावओ तप वहओ वहडावओ" इत्यादि ॥ ९२ ॥

कर्तव्या, मुख्यविहारिणा वाच्य च ॥ इति अस्वाध्यायमेलनाऽस्वाध्यायोच्चारणविधिरधिकार ॥ ९२ ॥

ननु–द्वितीया–पञ्चम्यष्टम्येकादशी–चतुर्दशीरूपाः पञ्चतिथयो या विद्यन्ते तासु धर्मार्थिनो विशेषेणैकाशन–विकृतिमत्या-

सप्तवन्दनकानि, अपराह्णेऽपि एवमेव सप्त भवन्ति । तत्र चत्वारि दैवसिकप्रतिक्रमणे, त्रीणि स्वाध्याये अनुज्ञावन्दनानां स्वाध्यायवन्दनेषु अन्तर्भावादिति सर्वसङ्ख्यया चतुर्दश वन्दनकानि भवन्ति, एतच्चाऽभक्तार्थिकं अङ्गीकृत्योक्तं, यस्तु भक्तार्थिकस्तस्य भोजनानन्तरमाविप्रत्याख्यानवन्दनकसहितानि पञ्चदश भवन्ति इति, एतेषां मध्यात् एकतरस्याऽपि कृतिकर्मणोऽकरणे मासकं लघुकं प्रायश्चित्तं भवति ॥ ४४६९ ॥ एवं आचारदिनकरेऽपि नवाङ्गीवृत्तिकारक-श्रीअभयदेवसूरिसन्तानीये श्रीरुद्रपल्लीगच्छीये श्रीवर्धमानसूरिभिः प्रोक्तं, तथाहि—तत्र यः किलाऽऽहारग्राही भवति तदा स वन्दनकद्वयं ददाति, यो नाऽऽहारग्राही तस्य नेति, इत्यादिग्रन्थानुसारेणाऽभक्तार्थिकस्य चतुर्दश वन्दनकानि भवन्ति, भक्तार्थिकस्य च पञ्चदश वन्दनकानि ज्ञेयानि, पश्चात् गच्छरीतिरपि प्रमाणमिति संवरणे भुक्तैरेव वन्दनकानि देयानि नाऽभुक्तैरिति ॥ ९२ ॥

॥ भोजनानन्तरं संवरणे वन्दनकानां अधिकारः ॥ ९२ ॥

ननु-चैत्राश्विनमासयोः अस्वाध्यायमेलनऽस्वाध्यायोत्तारणविधिः कः? उच्यते—चैत्राश्विनमासयोः द्वितीयपक्षे प्रतिपदि द्वितीयां वा मुख्यविहारिसाधोः चन्द्रादिबले मुहूर्ते च शुभे सति कल्पत्रेपमेलनं क्रियते, तत्राऽयं विधिः—स्थापनाचार्याग्रे समागत्य ईर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिकां प्रतिलेख्य वन्दनकद्वयं दत्त्वा "इच्छामि खमासमणं" इत्यादि क्षमाश्रमणपूर्वं "सज्झाय निक्खिवउं" द्वितीयक्षमाश्रमणेन "सज्झायनिक्खिवणत्थं काउस्सग्ग करुं", तृतीयक्षमाश्रमणेन "सज्झाय निक्खिवणत्थं करेमि काउस्सग्गं अन्नत्थूससिएणं"मित्यादिपाठपूर्वं कायोत्सर्गं, तत्र नमस्कारं एकं चिन्तयित्वा पुनर्नमस्कारं एकं कथयित्वा अणुजाणिज्जो इति कथनं । अथोत्तारणविधिः—यथाहि, वैशाख-कार्तिकमासयोः प्रथमपक्षे द्वितीयातः पश्चात् सोम-

वारे बृहस्पतिवारे वा भरण्यादिवर्जिते चतुष्पादके नक्षत्रे मुख्यविहारिसाधोः चन्द्रादिबले सिद्धियोगे सति कल्पत्रेपोच्चारणानन्तर मध्याह्नात् परतः सायतनप्रतिक्रमणानन्तर वा ईर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिका प्रतिलेख्य वन्दनकद्वय च दत्त्वा प्रथमक्षमाश्रमणेन "सज्झायं उक्खिवऊ" द्वितीयक्षमाश्रमणेन "सज्झाय उक्खिवणत्थ काउस्सग्गं करु इच्छं सज्झाय उक्खिवणत्थं करेमि काउस्सग्ग अन्नत्थ०" इत्यादि कथनपूर्वं कायोत्सर्गं कृत्वा तत्र सागरवरगंभीरापर्यन्तं लोकोद्द्योतकर चिन्तयित्वा पारिते च सपूर्णः कथ्यते १। पुनः क्षमाश्रमणदानपूर्वं "असज्झाय–उहडावणत्थ" कायोत्सर्गः क्रियते, तत्र लोकोद्द्योतकरचतुष्टय चिन्त्यते, पारिते च संपूर्णः २। पुनः क्षमाश्रमणपूर्वं "खुद्दोवद्दवउहडावणत्थ" कायोत्सर्गं कृत्वा लोकोद्द्योतकरचतुष्टय चिन्तयित्वा पारिते संपूर्णः ३। पुनः क्षमाश्रमणदानपूर्वं शक्रादिसमस्तवैयावच्चगरदेवतानिमित्त कायोत्सर्गं क्रियते तत्राऽपि लोकोद्द्योतकरचतुष्टय चिन्तयित्वा पारिते सपूर्णमेक कथयित्वा, क्षमाश्रमणदानपूर्वं "सज्झाय सदिसावेमि सज्झाय करेमि निसीहिआए मत्थएण वदामि" इत्युक्ते पूर्वमुपविश्य स्वाध्यायः क्रियते, तत्र नमस्कारत्रयपूर्वं "धम्मो मगलमुक्किट्ठमि"त्यादि षड्जीवनिकायाध्ययन यावत् मधुरस्वरेण स्वाध्याय कर्तव्यः। ततोऽनुज्येष्ठ साधुभि प्रत्येक वन्दना कर्तव्या, मुख्यविहारिणा वाच्य च "सिद्धांत भणओ भणावओ तप वहओ वहडावओ" इत्यादि ॥ ९३ ॥

॥ इति अस्वाध्यायमेलनाऽस्वाध्यायोच्चारणविधिरधिकार ॥ ९३ ॥

ननु–द्वितीया–पञ्चम्यष्टम्येकादशी–चतुर्दशीरूपाः पञ्चतिथयो या विधन्ते तासु धर्मार्थिनो विशेषेणैकाशन–विकृतिमत्या-

ख्यानादिकं प्रत्याख्यानं कुर्वन्तो दृश्यन्ते । तत्राऽष्टमी–चतुर्दश्योः तपोनियमः क्रियमाणः सगच्छते, तयोः पुण्यतिथित्वेन लोके प्रसिद्धत्वात्, पर्वत्वेन आगमेषु उक्तत्वाच्च, पर्वणि च तपो बहुगुणमेव भवति, यदुक्तं—

"उत्तरकरणं एगग्गया य आलोय–चेइयवंदणया । मंगलधम्मकहा वि अ, पव्वेसु तवो गुणा हुंति ॥ १ ॥"

न पुनर्द्वितीयादिषु तद्विपरीतत्वात् अथवा सत्कृत्यत्वात् असौ अविशेषेण पञ्चदशस्वपि तिथिषु युज्यते, न पुनः प्रतिनियतासु तासां अनागमिकत्वेन मिथ्यात्वहेतुत्वात्, इति चेत् सत्यं, यद्यपि एताः पुण्यदिनत्वेन लोके न प्रसिद्धा, नाऽपि पर्वत्वेनाऽऽगमेऽपि उक्ता दृश्यन्ते, तथापि केनाऽपि कारणेन बहुश्रुतैः आदृताः, तथाहि–श्रावकविधौ पण्डितराजपरमार्हतधनपालेनोक्तम्—

"पञ्चविहविसयसुक्खं, उवभुंजइ परमिएसु दिवसेसु । तीव्वाभिलासविरओ, परिहरओ पंचसु तिहिसु ॥ १ ॥"

इत्येता एव पञ्च तिथयः पञ्चदशीसहिताः षट् भवन्ति ता अपि श्रुतधरैः आदृताः, तथाहि दिनकृत्ये ( ७ पत्रे )—

"छण्हं तिहीण मज्झंमि का तिही अज्ज वासरे । किं वा कल्लाणगं अज्ज–लोगनाहाण [ मतिय ] सति य ॥२१॥" इति ।

ननु–सामान्योक्तौ कथं ज्ञायते यैः एता एव विवक्षिता नाऽन्या ? इति चेदुच्यते–वृद्धव्यवहारात् तेषामेव ग्रन्थान्तरे उक्तत्वाच्च, तथाहि तद्ग्रन्थः—"बहिड्ड १ बुमि २ चउद्दसीसुं ३ च पुन्निम ४ बी एगारसि ५ पंचमी ६ दोगासणादि तवं १ इति आगमिकवद्बहुमाननीयाः श्रुतधरवचनस्य प्रायः श्रुतमूलत्वादिति श्रीसन्देहदोलावलीवृत्तौ चतुश्चत्वारिं

शङ्गाथा ४४ व्याख्याने । पुनर्महानिशीथे सप्तमाध्ययने, "अट्ठमी १ चउद्दसी २ नाणपचमी ३ पज्जोसवण ४ चाउमासिए ५ चउत्थाट्ठमछट्ठे न करिज्जा खवण"मिति ॥ ९४ ॥

॥ इति पञ्चतिथीना नामाधिकारः ॥ ९४ ॥

ननु-प्राभातिक प्रतिक्रमणं कुत्र स्थाने पूर्णीभूत कस्मात् स्थानात् छन्दनादोपो न भवति ? उच्यते-देववन्दनानन्तर श्रीआचार्यादिवन्दनाक्षमाश्रमणत्रये दत्ते सति रात्रिकप्रतिक्रमण सपूर्णं, ततः पर आन्तरणीदोपो न भवति, तथैव प्रतिक्रमण प्रान्तता, श्रीजिनप्रभसूरिभिः श्रीविधिप्रपायां लिखिता, तथाहि—"अरिहतचेइआइ इच्चाइ पढिय थुइचउक्केण चेइए वदेइ, जावति चेइआइ इच्चाइ गाहादुगथुत्त पणिहाणगाहाओ न भणेइ, तओ आयरियाइं वदेइ तओ वेलाए पडिलेहणाइ करेइ"त्ति । एवमेव तरुणप्रभसूरिकृतषडावश्यकबालावबोधेऽपि, तथाहि—"एगखमासमणि आचार्यमिश्र वांदीयइ, बीजै खमासमणि उपाध्यायमिश्र वादीयइ, त्रीजै खमासमणि सर्वसाधु वादीयइ एतलै रात्रिप्रतिक्रमण सपूर्णं थयु, तउ पछै कम्मभूमि पढमसंघयणि इत्यादि नमस्कार श्रीऋषभवर्धमानक इत्यादि स्तवनमतिलेखनाकुलकादिक 'अट्ठावयमि उसभो' इत्यादि प्रभातमागलिक्य भावनाकुलकसज्झाय करइ ॥ ९५ ॥

॥ इति प्राभातिकप्रतिक्रमणप्रान्तताधिकारः ॥ ९५ ॥

ननु-सामायिकस्थ श्रावक उत्तरीय प्रावरण प्रावृणोति किं वा केवलपरिधानशाटक एव तिष्ठति ? उच्यते—नोत्तरीयप्रावरण प्रावृणोति, तस्य सतोऽपि सामायिकग्रहणसमये व्युत्सर्जनत्वोक्तत्वात्, यदुक्त श्रीआवश्यकचूर्णौ, तथाहि—"सो अ

फिर सामाइअ करिंतो मउडं अपणेइ १ कुंडलाणि २ नाममुद्द ३ तबोल ४ पावारगमाइ वोसरइ" इति । तत सामायिकस्य उत्सर्गतः अप्रावरण एव तिष्ठति, तदानीं तस्य यतिभूतत्वात्, यदुक्त 'हेमंतेसु अवाउडे ति, समणो इव सावओ हवइ जम्हा' इति वचनाच्च, अपवादतस्तु काष्ठदाहशीतादिकारणमाश्रित्य त्रीणि उत्तरीयाणि प्रावरितु कल्पन्ते नाऽधिकानि, तान्यपि कालप्रतिलेखितानि तस्य यतिवृत्तित्वात् यतीनां च शीताद्यपवादे कल्पत्रयस्य क्रमेण प्रावरणाना ग्रहणमुक्त, तथैव च ओघनिर्युक्तिभाष्ये भणितं, तथाहि-"जाहे तह वि न तरे ताहे निविट्ठेग पाउणे खोम । तेण वि असंथरतो दो खोमि पाउणे ताहे ॥१॥" तहवि असंथरतो तईअ ओण्णि पाउणे" इत्येवमेव श्रीसन्देहदोलावलीसूत्रे (६८ पत्रे) प्रोक्त, तथाहि—

"उस्सग्गनयेणं सावगस्स परिहाण साडगावसर । कप्पइ पाउरणाइ, न सेसमववायओ तिन्नि ॥ ४६ ॥"

यत एव प्रावरणपरिभोगः अपवादिकोऽत एव असौ परिधानाद् अन्यवस्त्र शीतदंशमशकादिकारणत प्रतिसेवितुकाम एव सामायिकग्रहणक्षणे प्रावरणं संदेशयति नाऽन्यथा यथा उष्णकालादौ इति भाव । ननु–कृतसामायिकाया श्राविकाया उत्सर्गतः कति वस्त्राणि प्रतिपादितानि सन्ति ? उच्यते—परिधानशाटिका १ कञ्चुक २ उपरितनांशुक चेति ३ वस्त्रत्रय स्वदेहे यथास्थानोपयुक्त सत् कल्पते । अयमभिप्रायो यद्यपि सामायिकग्रहणवेलायां परिधानादन्यः सर्वोऽपि परिग्रह सावद्यव्यापारहेतुत्वात् व्युत्सृज्यतया उक्तः, इति अप्रतिलेख्यत्वात् अजुनवत् कञ्चुलिकागुणितशाटिके न सामायिके परिमोक्तुं अर्हतः, तथाऽपि स्वस्याऽन्येषा च अशुभभावहेतुः स्तनस्तननेत्रजघनाद्यङ्गावयवाच्छादकतया बहुगुणा, कञ्चुलिका शाटिका प्रच्छदपटा इत्येतान् सामायिकेऽपि न व्युत्सृजन्ति, जिनवचनबहुमानात् महासत्त्वः श्राविकाः ततः

कय अन्यदा व्युत्सृजन्ति, तथा च या गृहिण्यो नीरोगा अपि सम्यक्त्वप्रतिपत्त्यनन्तरं स्वदेशानुरोधाद्वा १ धर्मोदि-
कारणाद्वा २ वस्त्रमालिन्यादि भयाद्वा ३ यूकापाताविशङ्कया वा ४ वैधव्यस्थित्या वा ५ अपरिहितकञ्चुका अस्थानविदी-
र्णपरिधाना अस्थगितशिरसः परिधानाऽञ्चलस्थगितशिरसो वा स्त्रीवृन्दमध्येऽपि चिरं तिष्ठन्ति । किं पुनः पुरुषा—लोके ता
विराधका एव बोद्धव्याः प्रवचनलाघवहेतुत्वादिति, एवमेव कृतसामायिकाया श्राविकाया उत्सर्गतो वस्त्रत्रयस्यैव ग्रहणं
श्रीसन्देहदोलावलीसूत्रे ( ६९ पत्रे ) युगप्रधानश्रीजिनदत्तसूरिभिर्लिखितमस्ति, तथाहि—

"एवं कयसामइया, वि साविगा पवमनयमप्पणेह । कडिसाडगकञ्चुयमु—त्तरीज्ज—वत्थाणि धारेइ ॥ ४७ ॥" गाथा ।

ननु—कृतसामायिकश्राविकाया यद् वस्त्रत्रयं उत्सर्गतः प्रतिपादितं तत् ज्ञातं, परं अपवादतः सा कियन्ति वस्त्राणि
बिभृयात् ? उच्यते—शीतादिकारणे सति प्रागुक्तपरिधानशाटक—कञ्चुकोत्तरीयरूपाणां औत्सर्गिकवस्त्राणामुपरि पुनः प्राव-
रणवस्त्रत्रयेण अङ्गानि आच्छादयति, अत एव शरीरलग्नवस्त्रत्रयादधिकं एकं द्वे वा त्रीणि वा च वस्त्राणि प्रावरीतुका-
माऽपि असौ प्रावरणं संदिशति एवं प्रावृणोति नाऽन्यथा । प्रतिक्रमणे तु षोढाऽऽवश्यककरणवेलायां पुनस्त्रिपदं शीता-
द्यवाद्यपवादपरिगृहीतं प्रावरणरूपं वस्त्रस्थानत्रयं परिहरति, स्वस्थानोपयुक्तैकशाटिकाकञ्चुकोत्तरीयेभ्योऽन्यत् प्रतिक्र-
मणकाले श्राविकाया न कल्पते इत्यर्थः । इत्थमेव कृतसामायिकायाः श्राविकायाः अपवादपदेन श्रीजिनदत्तसूरियुगप्रधा-
नैरपि सन्देहदोलावलीसूत्रे ( ६९ पत्रे ) प्रतिपादितमस्ति । तथाहि—

“चीअपएण तिण्हुवरि तिहिँ तु वत्थेहिँ पाउअगी उ । सामाइअवय पालइ, तिपय परिहरइ पडिक्कमणे ॥ ४८ ॥”

ननु–अपवादे निर्ग्रन्थानां कल्पसप्तकं अनुज्ञातमस्ति, तथाहि कल्पभाष्ये तृतीयोद्देशे—

“अप्पा असथरतो, निवारिओ होइ तिही वत्थेहिँ । गिण्हति गुरुविदिण्णे, पगासपडिलेहणे सत्त ॥ ३९८५ ॥

तिन्नि कसिणे जहन्ने, पंच य पडिवुण्णकाइँ गेण्हेज्जा । सत्त य पडिजुण्णाइ, एय उक्कोसग गहणं ॥ ३९८६ ॥” इति,

‘निवारितो होइ’त्ति अप्यादिविराधनातो निवारितो भवतीत्यर्थः । तत्कथं सामायिकस्थत्वेन निर्ग्रन्थतुल्यस्याऽपि श्राद्धस्य अपवादतः त्रीणि एव उक्तानि, कथं वा सामायिकस्थत्वेन निर्ग्रन्थीसमानायाः श्राविकाया अपि त्रीण्येव उक्तानि ? इति चेत् उच्यते–यतीनां यावत् जीविकव्रतत्वेन विकृष्टतपःकारितत्वेन शीतलाहारभोजित्वेन अनभ्यक्तशरीरत्वेन प्रायो मलिन-जीर्णवस्त्रत्वेन अनियतोपाश्रयत्वेन रूक्षवृत्तित्वेन च शीतं प्रचुरं लगति, तेन च सोढेन अल्पसंहननत्वेन ते घन आबा-ध्यन्ते इति तेषां सप्त उपदिष्टानि, श्राद्धास्तु मुहूर्तमात्रपाल्यसामायिकव्रतत्वादिना तद्विपरीता इति तेषां कियतापि शीतेन सोढेनाऽपि न कदाचिद् आबाधा भवतीति त्रीणि एव उक्तानि, एवं श्राविकाणामपि भाव्यं, अत्यन्तापवादे तु एवं “जहा समाहिँ बहूणि वि कप्पाइं पाउणइ” इति वचनात् साधूनामिव द्वयानामपि एषां बहूनि अपि प्रावरीतुं कल्पन्ते । यदि वा विकृष्टतपःप्रतिपत्तिवशात् यदा एष सामायिके चिरकालं तिष्ठति, यथोपधानतपोवाही, तदा अस्य गृहस्थस्याऽपि तावन्ति प्रावरणानि कल्प्यन्ते, यावद्भिः प्रावृतैः शीतधर्मादिना न आक्रम्यते, यद्यपि उपधानतपोवाही पौषधस्थ एवोच्यते न सामायिकस्थः, तथापि पौषधे सति अवश्यमेव सामायिकं भवतीति, तदीया एव सर्वाऽपि उपसर्गोपबाधादिव्यवस्था

तत्र भवति, केवलं शयासंस्तारकादिविधिः एवाऽत्राऽधिकः । तन्मूलस्य शयनविधेः पौषधे एव उक्तत्वादिति । 'पुर्व जाहे तह वि' इत्याद्योघनिर्युक्तिभाष्येण कल्पत्रयस्य प्रावरणमेव अपवादिकं साधोः उक्तं । ननु ग्रहणं, यतः औघिको पकरणान्तर्गतत्वेन उत्सर्गेण साधु कल्पत्रयं गृह्णाति यदुक्तं चतुर्दशउपकरणसंख्यायां, 'तिन्नेव य पच्छादगा' इति केवलमिदं संवर्त्तितमेव सत् उत्सर्गेण वामस्कन्धेन वहति शीतवातादिकारणेन पुनः प्रावृणोति, अत्र तु 'गिण्हई गुरुव दिन्ने' इत्यादिना कल्पभाष्येण कल्पसप्तकस्य ग्रहणमेव अपवादिकं उक्तं, ततो यतिः उत्सर्गेण तिस्रः प्रच्छादकाः संगृह्णाति अपवादतस्तु सप्त प्रावृणोति च, तिस्रोऽपि सप्ताऽपि अपवादतः एवेति न पूर्वापरविरोध इत्यर्थः, पुनरत्राऽर्थे विस्तरार्थिना युगप्रधानश्रीजिनदत्तसूरिविरचितं सन्देहदोलावलीसूत्रं तद्वृत्तिश्च द्रष्टव्ये ॥

इति साधूनां उत्सर्गे वस्त्राणामेकं, अपवादे त्रयं, अत्यन्तापवादे सप्तकं ।

कृतसामायिकश्राद्धानां उत्सर्गे एकं, अपवादे त्रयं, श्राविकाणां उत्सर्गे त्रयं अपवादे षट् इत्यधिकारः ॥ ९६ ॥

ननु–"गुरुविरहंमि अ ठवणा" इति वचनप्रामाण्यात् काष्ठादिस्थापना स्थाप्यते तत् युक्तं, परं सा स्थापना गुरो वा अर्हतो वा यदि गुरोः तदा प्रतिक्रमणादौ क्रियमाणे शक्रस्तवपाठः तदग्रे न युक्तः, अथ यदि अर्हतः स्थापना तदा 'गुरुविरहमि अ ठवणा' इति वाक्यं हृदि निधाय तत् स्थापनं असंगतं इव स्यात्, ततः किं तत्त्वं ? तत्रोच्यते—एका काष्ठादिस्थापना पञ्चानामपि परमेष्ठिनां अस्ति, अत्र पञ्चाऽपि परमेष्ठिनः स्थापिताः सन्ति । अथ कश्चित् प्रेरयिष्यति श्राविकाभिः गुरूणां संघट्टो रक्षणीयः, तर्हि कथं आर्यिकाः स्थापनाचार्यं स्थापयन्ति ? अथ निजमहत्तरा कल्प्यते इति चेत् तत्र स्थापनाचार्यं

पञ्चपरमेष्ठिनः स्थाप्यन्ते न साध्व्यः तथा च स्थापनायां संघट्टो भवतीति अचेतनत्वात् तीर्थंकरस्थापनावत् यथा श्राविकाणा तीर्थंकरप्रतिमासंघट्टो न भवति एवं स्थापनाचार्यस्याऽपि । यदुक्त श्रीव्यवहारभाष्ये दशमोद्देशके, तथाहि—

"दसविहवेयावच्च, इमं समासेण होइ नायव्वं [ विन्नेय ] । आयरिय–उवज्झाए, थेरे अ तवस्सि सेहे य ॥ १२३ ॥

अंतरवकुलगणे य संघे साहम्मि वेयावच्चे अ । एएसिं तु दसण्ह, कायव्व तेरसपएहिं ॥ १२४ ॥" इति ।

परः प्राह–नन्वत्र आचार्यस्य वैयावृत्य उक्त न तु अर्हतः ? उच्यते–अत्र 'आयरिये' ति पदेन तीर्थङ्करो व्याख्यातोऽस्ति, यदुक्तम्—

"तित्थयरवेयावच्च न भणियमित्थं तु किं न कायव्वं । किं वा न होइ निज्जर, तहिअ अह चेइआयरिओ ॥ १ ॥

"आयरियगहणेणं, तित्थगरो तस्थ होइ गहिओ उ । किं वा न होआयरिओ, आयर उवदिसते अ ॥ १३२ ॥"

तत एकस्यामेव स्थापनायां आवश्यकादिकरणकाले स्थापनाचार्य इति व्यपदिश्यते, चैत्यवन्दनवेलाया तु स्थापनाऽर्हमिति, "जिणविरहंमि अ जिणबिंब ठावणे" ति वचनात् । न वाच्यं एकत्रैव अर्हद्व्यपदेश आचार्यव्यपदेशश्च विरुध्येव, तयोरन्वयोः अर्हत्त्व–गुरुत्वयो एकत्वसञ्ज्ञायस्य आगमे सत्यापितत्वात्, तत्र प्राग्व्यवहारभाष्यगाथाया आयरियपदेन द्वयमपि दर्शित, तीर्थङ्करस्य च आचार्यत्वं सर्वत्र सिद्धान्तादिषु प्रतिपादितमस्ति । तत्र श्रीभगवत्यां ( ११५ पत्रे ) श्रीगौतमस्वामिना श्रीमहावीरदेवस्य धर्माचार्यस्व उक्तमस्ति, तथाहि—

"तए ण से भगवं गोयमे खदयं कच्चायणस्सगोत्तं एव वयासी एव खलु खंदया ! मम धम्मायरिए मम

समणे भगवं महावीरे उप्पन्ननाणदंसणधरे अरहा जिणे केवली तियपडुप्पन्नमणागयवियाणए" इत्यादि । पुनः श्रीभगवत्यां
कोणिकसंग्रामे गाढप्रहारजर्जरिताङ्गो नागपौत्रो वरुणनामा पर्यन्ताराधनाऽभिमुख प्राह "नमुत्थुण समणस्स भगवओ महा-
वीरस्स आइगरस्स जाव संपाविउकामस्स मम धम्मायरियस्स त्ति", पुनः श्रीविशेषावश्यकगाथायामपि धर्माचार्यत्वे—
"ठवणा वि य निअगुरुणो, सुत्ते भते त्ति जेण गणहारी । आमतइ तित्थयरं, सेसा य अप्पणो य गुरु ॥ १ ॥" इति ।
पुनः श्रीउपदेशमालासूत्रे श्रीधर्मदासगणिनाऽपि प्रोक्त—
"आयरिय[भत्ति]धम्मरागो, कस्स सुनक्खत्तमहरिसीसरिसो । अवि जीविअ ववसिअ, न चेव गुरुपरिभवो सहिओ ॥१००॥"
पुनः श्रीपञ्चमाङ्गे सिंहानगारेण रेवत्यग्रेऽपि श्रीमहावीरदेवस्य अर्हतो धर्माचार्यत्व प्रोक्तमस्ति, एवमनेकेषु स्थानेषु अर्हतो
धर्माचार्यत्व निगदितमस्ति, अतो न कश्चिद्विरोधः । ननु–भवतु नाम एकस्यामेव अवस्थाया स्थापनाचार्यो वा स्थापनार्हन्
वा, परमसौ स्थाप्यप्रमाणमेव कर्तुमुचितो न लघुतरो महत्तरो वा, तावत्प्रमाणे हि तस्मिन् दृष्टे सोऽय इति अध्यवसन्ति
तद्भक्ताः, किं नाऽध्यवसितः कृतपुण्यप्रतिनिधिः कृतपुण्य इति तत्पुत्रै इति वाच्य । स्थापनाकल्पस्य आगमे अनियत-
मानस्यैव प्रतिपादितत्वात् तथाहि आवश्यके–
"अक्खे वराडए वा, कट्ठे पोत्थे य चित्तकम्मे अ । सब्भावमसब्भाव, ठवणाकप्प विआणाहि ॥ १ ॥" इति ।
अथ वराटकाना स्वभावतो एव लघुत्वात् काष्ठाना च याहच्छिकत्वेन अनियतत्वात्, किं च स्थाप्यप्रमाणा एव स्थापना
यदि अभविष्यत् तदाऽर्हत्स्थापनाऽपि तादृशेवाऽकारयिष्यत् अर्हश्च उत्कृष्टत॰ पञ्चशतधनुःप्रमाणं एव, जघन्यतस्तु

सद्य हस्तमान एव भवति, तथा च सति तन्मानतो लघुतरार्हत्प्रतिमाः सर्वा अपि अप्रमाणता प्राप्स्यन्ति, साम्प्रत तु अर्हत् प्रतिमाः लघुतराः प्रतिग्रामं प्रतिनगरं प्रतिदेवगृह दृश्यन्ते, ततः तासा समाराधन अफलमेव स्यात् न च तदफल भवति संविग्नश्रुतधरैः आदृतत्वात् । तस्मात् यथा स्थाप्यमानात लघ्व्यो लघुतरा–लघुतमाऽपि तीर्थकृत्प्रतिमा आराध्यन्ते तथा स्थापनाचार्योऽपि, तथा शीतलाचार्येणाऽपि श्रीआवश्यके गुरुस्थापना स्थाने दण्डकः स्थापितोऽस्ति । पुनर्विस्तरार्थिना श्रीसन्देहदोलावलीबृहद्वृत्तिः द्रष्टव्या ॥ ९७ ॥

॥ इति स्थापनाया पश्चाऽपि परमेष्ठिन इत्यधिकारः ॥ ९७ ॥

ननु–श्रुतदेवतादीनां कायोत्सर्गः प्रतिक्रमणे क्रियते, स सिद्धान्तोक्त्या आचरणया वा क्रियते ? उच्यते–आचरणया, यदुक्त श्रीहरिभद्रसूरिभिः श्रीपञ्चवस्तुकवृत्तौ ( ८० पत्रे ), तथाहि—

"पम्हट्ठमेरसारण, विणओ उ ण फेडिओ हवइ एव । आयरणा सुयदेवय–माईण होइ उस्सग्गो ॥ ४९१ ॥"

वृत्तिः–आचरणया श्रुतदेवतादीनां भवति कायोत्सर्गः, आदिशब्दात् क्षेत्रभवनदेवतापरिग्रह इति । ननु इय आचरणा कदा जाता ? उच्यते–पूर्वधरकाले समाव्यते—यतः श्रीवीरनिर्वाणाद्वर्षसहस्रे गते पूर्वश्रुत व्यवच्छिन्न, अय च श्रीह-रिभद्रसूरिस्तु वीरनिर्वाणात् पञ्चपञ्चाशदधिकवर्षसहस्रे व्यतीते दिव गताः, यदुक्त—""पचसयतिपन्नवरिसे ४५३, काल-गगुरुणा सरिस्सई गहिआ । चउसयसत्तरिवरिसे ४७०, वीराओ विक्कमो जाओ ॥ ११ ॥ तत·—"पचसए पणतीए, विक्कमकालाओ झत्ति अत्थमिओ । हरिभद्दसूरिसूरो, [illegible]" —ति । श्रीहरिभद्रसूरिण

तु पञ्चवस्तुके आचरणया श्रुतदेवतादिकायोत्सर्गकरण लिखित, ततः सा आचरणा श्रीहरिभद्रसूरितः प्राक् पूर्वधरकाले एव जातेति ॥

ननु-भवतु नाम श्रुतदेवतादिकायोत्सर्गकरण पूर्वधरकालेऽपि तस्य दृश्यमानत्वात्, पर श्रुतदेवतादिकायोत्सर्गकरण सम्यग्दृशां न युज्यते इति यत् कस्यचिद्वचनं, तदयुक्तं, आगमे तस्य उपदिष्टत्वात्, तथाहि—( ८० पत्रे ) चाउम्मासिय वरिसे, उस्सग्गो खित्तदेवयाए उ। पक्खिय सिज्जसुराए, करिंति चउमासिए वेगे ॥ ४९२ ॥ इति श्रीआवश्यककायोत्सर्गनिर्युक्तौ ( पत्रे ७९४ ) पुन चाउम्मासिअ संवच्छरिएसु सव्वेऽवि मूलउत्तरगुणाणं आलोयणं दाऊण पडिक्कमंति, खेत्तदेवयाए उस्सग्गं करेंति, केई पुण चाउम्मासिगे सिज्जदेवयाएवि काउस्सग्गं करिंति, इति श्रीआवश्यकचूर्णौ। पुनरपि चाउम्मासिए एगो उवस्सयदेवयाए काउस्सग्गो कीरइ, संवच्छरिए खित्तदेवयाएवि कीरइ अब्भहिओ इति श्रीआवश्यकचूर्णौ। तथा श्रुतदेवतायाश्च आगमे महती प्रतिष्ठा दृश्यते, तथाहि— सुयदेवयाए असायणाए सुतदेवता जाए सुयमहिट्ठिअं तीए आसायणा, नत्थि सा, अकिंचित्करी वा एवमादि श्रीआवश्यकचूर्णौ—

"जा दिट्ठिदाणमित्तेण देइ पणयाण नरसुरसमिद्धिं। सिवपुररज्ज आणारयणा देवीइ तीइ नमो ॥ १ ॥"

श्रीआराधनापताकायाम्—

"यत्प्रभावादवाप्यन्ते, पदार्थाः कल्पना विना। सा देवी संविदे नस्तादस्तकल्पलतोपमा ॥ १ ॥"

इति। श्रीउत्तराध्ययनबृहद्वृत्तौ—

सप्त हस्तमान एव भवति, तथा च सति तन्मानतो लघुतरार्हत्प्रतिमाः सर्वा अपि अप्रमाणता प्राप्स्यन्ति, साम्प्रतं तु अर्हत् प्रतिमाः लघुतराः प्रतिग्रामं प्रतिनगरं प्रतिदेवगृहं दृश्यन्ते, ततः तासां समाराधनं अफलमेव स्यात् न च तदफलं भवति संविग्नश्रुतधरैः आदृतत्वात्। तस्मात् यथा स्थाप्यमानात् लघ्व्यो' लघुतरा-लघुतमाऽपि तीर्थकृत्प्रतिमा आराध्यन्ते तथा स्थापनाचार्योऽपि, तथा शीतलाचार्येणाऽपि श्रीआवश्यके गुरुस्थापना स्थाने दण्डकः स्थापितोऽस्ति। पुनर्विस्तरार्थिना श्रीसन्देहदोलावलीबृहद्वृत्तिः द्रष्टव्या ॥ ९७ ॥

॥ इति स्थापनाया पञ्चाऽपि परमेष्ठिन इत्यधिकारः ॥ ९७ ॥

ननु-श्रुतदेवतादीनां कायोत्सर्गः प्रतिक्रमणे क्रियते, स सिद्धान्तोक्त्या आचरणया वा क्रियते ? उच्यते-आचरणया, यदुक्तं श्रीहरिभद्रसूरिभि' श्रीपञ्चवस्तुकवृत्तौ ( ८० पत्रे ), तथाहि—

"पम्हट्ठमेरसारण, विणओ उ ण फेडिओ हवइ एवं। आयरणा सुयदेवय-माईणं होइ उस्सग्गो ॥ ४९१ ॥"

वृत्तिः-आचरणया श्रुतदेवतादीनां भवति कायोत्सर्गः, आदिशब्दात् क्षेत्रभवनदेवतापरिग्रह इति। ननु इयं आचरणा कदा जाता ? उच्यते-पूर्वधरकाले समाप्यते—यतः श्रीवीरनिर्वाणाद्वर्षसहस्रे गते पूर्वश्रुतं व्यच्छिन्नं, अथ च श्रीहरिभद्रसूरिस्तु वीरनिर्वाणात् पञ्चपञ्चाशदधिकवर्षसहस्रे व्यतीते दिवं गतः, यदुक्तं—"पणसयतिपन्नवरिसे ४५३, कालगगुरुणा सरिस्सई गहिआ। चउसयसत्तरिवरिसे ४७०, वीराओ विक्कमो आओ ॥ ११ ॥ तथा—"पञ्चसए पणतीए, विक्कमकालाओ झत्ति अत्थमिओ। हरिभद्दसूरिसूरो, निवुओ दिसओ सिवसुक्खं ॥ २०० ॥" इति। श्रीहरिभद्रसूरिणा

लिखित, ततः सा आचरणा श्रीहरिभद्रसूरित प्राक् पूर्व-
तु पञ्चवस्तुके आचरणया श्रुतदेवतादिकायोत्सर्गकरण
धरकाले एव जातेति ॥
ननु–भवतु नाम श्रुतदेवतादिकायोत्सर्गकरण पूर्वधरकालेऽपि तस्य दृश्यमानत्वात्, परं श्रुतदेवतादिकायोत्सर्गकरण
सम्यग्दृशां न युज्यते इति यत् कस्यचिद्वचन, तदु अयुक्त, आगमे तस्य उपदिष्टत्वात्, तथाहि—( ८० पत्रे )
चाउमासिय वरिसे, उस्सग्गो खित्तदेवयाए उ । पक्खिय सिज्जसुराए, करिंति चउमासिए वेगे ॥ ४९२ ॥ इति श्रीआ-
वश्यककायोत्सर्गनिर्युक्तौ ( पत्रे ७९४ ) पुनः चाउम्मासिअ संवच्छरिएसु सव्वेऽवि मूलउत्तरगुणाणं आलोयणं दाऊण पडि-
क्कमंति, खेत्तदेवयाए उस्सग्ग करेंति, केई पुण चाउम्मासिगे सिज्जदेवयाएवि काउस्सग्ग करिंति, इति श्रीआवश्यकवृत्तौ ।
पुनरपि चाउम्मासिए एगो उवस्सयदेवयाए काउस्सग्गो कीरइ, संवच्छरिए खित्तदेवयाएवि कीरइ अब्भहिओ इति श्रीआ-
वश्यकचूर्णौ । तथा श्रुतदेवतायाश्च आगमे महती प्रतिष्ठा दृश्यते, तथाहि–
सुयदेवयाए असायणाए सुतदेवता जाए सुयमहिट्ठिअं तीए आसायणा, नत्थि सा, अकिंचित्करी वा एवमादि श्रीआवश्यकचूर्णौ–
"जा दिट्ठिदाणमित्तेण देइ पणयाण नरसुरसमिद्धिं । सिवपुररज्ज आणारयणा देवीइ तीइ नमो ॥ १ ॥"
श्रीआराधनापताकायाम्—
"यत्प्रभावादवाप्यन्ते, पदार्थाः कल्पना विना । सा देवी संविदे नस्तादस्तकल्पलतोपमा ॥ २ ॥"
इति । श्रीउत्तराध्ययनबृहद्वृत्तौ—

सप्त हस्तमान एव भवति, तथा च सति तन्मानतो लघुतरार्हत्प्रतिमाः सर्वा अपि अप्रमाणतां प्राप्स्यन्ति, साम्प्रतं तु अर्हत् प्रतिमाः लघुतराः प्रतिग्रामं प्रतिनगरं प्रतिदेवगृहं दृश्यन्ते, ततः तासां समाराधनं अफलमेव स्यात् न च तदफलं भवति सविप्रश्रुतधरैः आदृतत्वात्। तस्मात् यथा स्थाप्यमानात् लघ्व्यो लघुतरा-लघुतमाऽपि तीर्थकृत्प्रतिमा आराध्यन्ते तथा स्थापनाचार्योऽपि, तथा शीतलाचार्येणाऽपि श्रीआवश्यके गुरुस्थापना स्थाने दण्डकः स्थापितोऽस्ति। पुनर्विस्तरार्थिना श्रीसन्देहदोलावलीबृहद्वृत्तिः द्रष्टव्या ॥ ९७ ॥

॥ इति स्थापनाया पश्चाऽपि परमेष्ठिन इत्यधिकारः ॥ ९७ ॥

ननु-श्रुतदेवतादीनां कायोत्सर्गः प्रतिक्रमणे क्रियते, स सिद्धान्तोक्त्या आचरणया वा क्रियते ? उच्यते-आचरणया, यदुक्तं श्रीहरिभद्रसूरिभिः श्रीपञ्चवस्तुकवृत्तौ ( ८० पत्रे ), तथाहि—

"पम्हट्ठमेरसारण, विणओ उ ण फेडिओ हवइ एवं। आयरणा सुयदेवय-माईण होइ उस्सग्गो ॥ ४९१ ॥"

वृत्ति-आचरणया श्रुतदेवतादीनां भवति कायोत्सर्गः, आदिशब्दात् क्षेत्रभवनदेवतापरिग्रह इति। ननु इयं आचरणा कदा जाता ? उच्यते-पूर्वधरकाले संभाव्यते—यतः श्रीवीरनिर्वाणाद्वर्षसहस्रे गते पूर्वश्रुतं व्यवच्छिन्नं, अथ च श्रीहरिभद्रसूरिस्तु वीरनिर्वाणात् पञ्चपञ्चाशदधिकवर्षसहस्रे व्यतीते दिवं गतः, यदुक्तं—"चउसयतिपन्नवरिसे ४५३, कालगगुरुणा सरस्सई गहिआ। चउसयसत्तरिवरिसे ४७०, वीराओ विक्कमो जाओ ॥ ११ ॥ ततः—"पंचसए पणतीए, विक्कमकालाओ झत्ति अत्थमिओ। हरिभद्दसूरिसूरो, भविआण दिसउ कल्लाणं ॥ २०० ॥" इति। श्रीहरिभद्रसूरिणा

सिज्झसुरी उस्सग्गे, नेओ संतिथयस्स पढणे य ॥ ३१ ॥ एव चिअ चउम्मासे, वरिसे अ जहक्कमं विही णेओ । पक्खिय- चउमासवरिसेसु, नवरि नामस्स णाणत्त ॥ ३२ ॥ इति योगशास्त्रतृतीयप्रकाशवृत्तौ ( २४८ पत्रे ), एवं पाक्षिकवृत्तावपि श्रुतदेवतास्तुतिः, तथाहि–"सुअदेवया–भगवई०" श्रुताधिष्ठात्री देवता भवति च श्रुताधिष्ठात्री देवता, यदुक्त कल्पभाष्ये—

"सव च लक्खणोवेय, समाहिं दिंति देवया । सुत्त व लक्खणोवेय, जिणसव्वभासिय ॥ १ ॥" भगवतीपूजा ज्ञानाव० इत्यादि, ननु–कथ श्रुताधिष्ठातृदेव्या व्यन्तरादिप्रकारायाः कर्मक्षपणे सामर्थ्य ? उच्यते–तद्गोचरशुभध्यानस्याऽपि स्वतुः कर्मक्षयहेतुत्वेन अभिहितत्वादिति । एवं निशीथभाष्यचूर्णौ षोडशोद्देशकेऽपि [भव] वनदेवतादीना कायोत्सर्गकरण लिखितमस्ति, तथाहि—

"ताहे दिसाभाग अमुणता सबालवुड्ढगच्छस्स रक्खणट्ठा वणदेवयाए उस्सग्ग करिंति सा आकपिआ दिसभाग पथ वा कहेज्ज, सम्मदिट्ठिदेवया अण्णखवपसओ यह आएतावि उवति ते साधू तं, वइय पासित्ता आसासिया ते साहू ता ते देवयाए गोउलपरपरएण ता वाणीया जाव जणवद पत्ता ताहे सा देवता अतिमवइयाए उवगरणं विंटिय विस्सरावेइ, तीए अट्ठा साहुणो नियत्ता गोउल न पेच्छति, वेंटिय घेत्तु पडिगया गुरुणो कहति नत्थि सा वइयत्ति, नाय जहा देवयाए कयमिति । एत्थ सुद्धोचेव नत्थि पच्छित्त" इत्यादि । एवमेव श्रीदेवेन्द्रसूरिभिरपि श्रीसघाचारवृहद्वृत्तौ ( ३७० पत्रे ) सम्यग्दृष्टिदेवदेवीनां स्मरणीयत्वादिना व्यवस्थापन व्यधायि, तथाहि–"इह सुरा य सरणिज्जत्ति" इहशब्द पूर्वद्वारे सयोजितोऽपि डमरुकमणिन्यायेन अत्राऽपि सबध्यते । ततश्च इहेति सपूर्णचैत्यवन्दनाया क्रियमाणाया सुराश्च

"यस्याः प्रसादमतुलं, संप्राप्य भवन्ति भव्यजननिवहाः । अनुयोगवेदिनस्ता, प्रयतः श्रुतदेवता वन्दे ॥ १ ॥" इति ।

श्रीअनुयोगद्वारवृत्तौ तथा—

"पंचविहायारविसुद्धिहेउमिह साहु सावगो वावि । पडिकमणं सह गुरुणा, गुरुविरहे कुणइ इक्कोऽवि ॥ १ ॥ वंदित्तु चेइयाइं, दाउं चउराइए खमासमणे । भूनिहियसिरो सयलाइयारमिच्छुक्कडं देइ ॥ २ ॥ सामाइअपुव्वमिच्छामि ठाइउं काउस्सग्गमिच्चाइ इत्यादि १३ पुण पणवीसुस्सासं, उस्सग्गं कुणइ पारए विहिणा । तो सयलकुसलकिरिआ—फलाण सिद्धाण पढइ थयं ॥ १४ ॥ अह सुअसमिद्धिहेउ, सुअदेवीए करेइ उस्सग्गं । चिंतेइ नमुक्कारं, सुणइ य देइ य तीइ थुइं ॥ १५ ॥ एवं खित्तसुरीए, उस्सग्गं कुणइ सुणइ देइ थुइं । पढिऊण पंचमंगल—मुवविसइ पमज्ज संडासे ॥ १६ ॥ पुव्वविहिणेव पेहिअ, पुत्तिं दाऊणवंदणं गुरुणो । इच्छामो अणुसट्ठिं, ति भणिय जाणूहिं तो ठाइ ॥ १७ ॥ गुरुथुइगहणे थुइ तिण्णि वद्धमाणक्खरस्सरो पढइ । सक्कत्थयं थवं पढिअ कुणइ पच्छित्तउस्सग्गं ॥ १८ ॥ एवं ता देवसिअं, राइअमवि एवमेव नवरि तहिं । पढमं दाउं मिच्छामि दुक्कडं पढइ सक्कथयं ॥ १९ ॥ उट्ठिय करेइ विहिणा, उस्सग्गं इत्यादि गाथा ॥ २६ ॥ इच्छामो अणुसट्ठिं, ति भणिय उवविसिअ पढइ तिण्णि थुई । मिउसद्देण सक्क—त्थयाइ तो चेइए वंदे ॥ २७ ॥ अह पक्खियं चउद्दसि—दिणमि पुव्वं व तत्थ देवसिअं । सुत्तंत पडिक्कमिउं, तो सम्ममिमं कमं कुणइ ॥ २८ ॥ मुहपोत्ती वंदणयं, संबुद्धाखामणं तहाऽऽलोए । वंदण पत्तेअं खामणं च वंदणयमह सुत्तं ॥ २९ ॥ सुत्तं अब्भुट्ठाणं, उस्सग्गो पुत्ति वंदणयं तहय । पज्जंतियखामणयं, तह चउरो थोभवंदणया ॥ ३० ॥ पुव्वविहिणेव सव्वं, देवसिअं वंदणाइ तो कुणइ ।

कायोत्सर्गादिक पारयिष्यामि इत्यादिना सुदर्शनप्रियामनोरमाया इव तत्र तत्र सघकृत्ये प्रवर्तयितव्याः। अत्र चायं निशीथचूर्ण्युक्तो विधिः "पुव्वं अणुसिट्ठी किज्जइ थुइत्ति भणिय होइ, अणुसिट्ठी थुइति एगट्ठेत्ति" भाष्यवचनात् "साहु कय ते एव, वुच्चइ, जह्वा चपाए सुमद्दा। नागरजणेण अणुसिट्ठा घन्ना सपुन्ना सत्ति ॥ १ ॥ तेओ उवालभो, दिज्जइ साणुण। ओवएसपयाण, कीरइ त्ति वुत्त भवति ॥ २ ॥ पच्छा सो उवगहो किज्जइ १ भणिय स–दाणे दवावणे करणे अ, करणे य कयमणुण्णाए। ववहिअमणुवहिअ वा, आणहि उवगह एअ ॥ ३ ॥ एवमेव तत्रैव ग्रन्थे (३९४) पत्रेऽपि तथा च तत्पाठः–चतुर्थी स्तुतिः पुनर्वैयावृत्त्यकराणा–यक्षाम्राम्प्रभृतीनां सम्यग्दृष्टिदेवतानां, किमर्थमित्याह–उपयोगार्थं स्वकृत्येषु तेषा सावधानतानिमित्त भवति च गुणोपबृंहणतः तत्तन्नावबृद्धिः। ततश्च स्वकार्यकारित्वोपयुक्तत्वाज्जगत् प्रसिद्ध एतद् यत्प्रशसातः सोत्साह सर्वकार्यकरणादर इति। 'तु' शब्दो विशेषक तेन याः श्रुताङ्गीशासनदेवतादिविषया स्तुतयः ताः सर्वा अपि चतुर्थस्तुतौ निपतन्ति, गुणोपबृंहणद्वारेण तासामपि उपयुक्तादिफलत्वादिति। स्तुति[युगलेषु]युगन्तेषु तथा निबन्धनात्, गुणोत्कीर्तनस्य द्वितीयस्तुतिरूपत्वात्, तथाहि–जिनज्ञानस्तुतिर्वन्दनाद्यात्मकत्वाद् एका गण्यते, वैयावृत्यकरादिस्तुतयस्तु द्वितीया गुणोत्कीर्तनादिरूपत्वात्, एवमेव युगलत्वसिद्धेः, भावित चैतत् पञ्चमे वन्दनाद्वारे अत एव क्वचिद्युगले चतुर्थास्तुति· सर्वे यक्षाम्बिकेत्यादि वैयावृत्यकराणां, क्वाऽपि च भूयासु·। सर्वदा देवा देवीभिरित्यादि सामान्यत सर्वदेवताना कुत्राऽपि "गौरी सैरिमेति" विद्यादेवताना अन्यत्र 'निष्पङ्कव्योमनीले' ति देवविशेषविषया एकत्र विकटदर्शने ति देव्या एव, कुत्रचिद् च "आमूलालोलधूली"त्यादि श्रुतदेवतायाः इत्यादि परिभावनीय। इद सूक्ष्मधिया कुग्रहादिपरिहारेण। कायोत्सर्ग-

सूर्यश्चेति 'पुरुषस्त्रियो'ऽपि एकशेषे सुराः ते चात्र यक्षाम्बाप्रभृतयः सम्यग्दृष्टिदेवता ज्ञातव्या , न तु अर्हन्त , तेषा प्राग् वन्दनीयत्वेन अभिहितत्वात् अनुशासकत्वात् स्मारकत्वाच्च, एते च किं इत्याह–'सरणिज्जत्ति' स्मरणीयास्तु तद्गुणानुचिन्त नोत्कीर्तनादिनोपबृंहणीयाः, श्लाघनीया इत्यर्थः । अल्पश्च जिनप्रवचनस्यः स्वल्पगुणोऽपि, सम्यग्दृष्टिप्रशंसायाः कर्मक्षय-कारणत्वात् । उक्त च–"गुणपगरिसबहुमाणो, कम्मक्खयकारण जेण त्ति" । नैव चेत्तदा उत्तरोत्तरसंयमस्थानवर्तिभि साधुभिः जघन्यजघन्यतरादिसंयमस्थानवर्तिनः साधवोऽप्यनुपबृंहणीयाः स्युः, तेश्च नियमादिषु दृढाः श्रावका । न च एतदागमे दृष्ट इष्ट वा, यत् गुणिना गुणा न प्रशस्याः, दर्शनमालिन्याद्यवासेः । आह च "नो खलु अप्परिवडिए निच्छ यओऽभइलिए व सम्मत्ते । होइ तओ परिणामो जत्तो अणुवबूहणाईय त्ति" ॥ १ ॥ देशविरताना वा अविरताना वाऽविरतसम्यग्दृष्टयः श्राद्धाः सत्काराद्यर्हा न स्युः, तथा च सति–

तम्हा सव्वपयत्तेण, जो नमुक्कारधारओ । सावओ सोऽवि दिट्ठव्वो, जहा परमबंधवो ॥ १ ॥

इत्यादि अपार्थक स्यात् एष च सकलागमव्यवहारलोपात् विमर्शनीय इद सूक्ष्मधिया इति । यद्वा स्मरणीया–स्मारणादिषु प्रेरणार्हाः, तत्र "पमुहे गाहा" अयमर्थः–वैयावृत्त्यादिकारका गीयन्ते, तत्र चाऽनादरवता भवतां तत् किं स्वकृत्यमपि विस्मृतं ? न युक्तमत्र प्रमादयितु, दुर्लभा हि पुनरिय सामग्री २, दुःखदः प्रमादारिः ३ दुरितो भवोदधिविनिपातः ४ स्वनामैव सत्यापयति इत्यादि व्यङ्ग्यार्थगर्भितविशेषणद्वारेण स्मारणादि क्रियते, अथवा स्मरणीयाः संघादिकृत्ये वैयावृत्त्यप्रभावनादौ उपयोगप्रस्तावे प्रेरणार्हाः तत्तत्करणसक्तियुक्तत्वात्तेषा । इद उक्त भवति–यदाऽमुकसंघे प्रभावनादि करिष्यथ तदाऽहं अमुकं

शुभदिने शुभवेलायां शुभमुहूर्ते सघस्य कारकस्य वा चन्द्रबले सति गुरूपदेशेन सघस्य समुदाय सर्वं मेलयित्वा देवगृहे समेत्य स्नात्रकरणानन्तरं देवाग्रत धौत पवित्र निश्चलं पट्टक स्थापयित्वा तदुपरि केशरादितिलकपूर्वं ज्ञान–दर्शन–चारित्राणा अनुक्रमेण तन्दुलपुञ्जिकारूपा स्थापना क्रियते, ततो मूलनायकस्य दक्षिणाङ्गे इन्द्र १ अग्नि २ यम ३ नैर्ऋत ४ वरुण ५ वायु ६ कुबेर ७ ईशान ८ ब्रह्म ९ नागाना १० दशदिक्पालाना पूर्ववत् स्थापना क्रियते, ततो मूलनायकवामाङ्गे आदित्य १ सोम २ मगल ३ बुध ४ बृहस्पति ५ शुक्र ६ शनैश्चर ७ राहु ८ केतु ९ नवग्रहस्थापना क्रियते, ततः तद्दिश्येव चैत्यदेवता १ क्षेत्रदेवता २ देशदेवता ३ स्थापनात्रय क्रियते, एव २५ पुञ्जिकाना स्थापना कार्या । तदनु सर्वासा पुञ्जिकानामुपरि वलिपुष्पधूपनैवेद्यवासादिप्रक्षेपः कार्य । तत —

पुञ्जिकासु च ये देवा, देव्योऽपि गुरुणोदिताः । वलिपूजां प्रतीच्छन्तु, सन्तु सघस्य शान्तये ॥ १ ॥

अनेन श्लोकेन सर्वासामुपरि अखण्डजलधारादान कार्य, तत सर्व गृहागते पर्पटादिमिश्रभाजन बृहत्तर भृत्वा एकस्य हस्ते दत्त्वा पूर्वदिक्संमुख भूत्वा जलधारादानपूर्वं पूर्वदिशि वलिः प्रक्षिप्यते, तत्र–श्लोकश्चाऽयम्—

ऐरावतसमारूढः, शक्रः पूर्वदिशि स्थितः । सघस्य शान्तये सोऽस्तु, वलिपूजा प्रतीच्छतु ॥ १ ॥

एवमाग्नेय्या दिशि–आग्नेय्याविदिश स्वामी, श्रीवह्निश्छागवाहन । सघस्य शान्तये सोऽस्तु, वलिपूजा प्रतीच्छतु ॥ २ ॥

एव दक्षिणस्या दिशि–दक्षिणस्या दिश स्वामी, यमो महिषवाहन । सघस्य शान्तये सोऽस्तु, वलिपूजा प्रतीच्छतु ॥ ३ ॥

एव नैर्ऋतदिशि–याम्यऽपातरालेऽसौ, नैर्ऋतिः शववाहन । सघस्य शान्तये सोऽस्तु, वलिपूजां प्रतीच्छतु ॥ ४ ॥

विषयेऽपि बहु विमर्शनीयं, यतो दैवसिकावश्यकमध्ये सामान्यतो वैयावृत्यकरान् विमुच्य केवलश्रुतदेवतादेः कायोत्सर्गकरणं, पाक्षिकादौ तु भवनदेव्याः, दीक्षादौ तु शासनदेव्यादीनामपि, अलं प्रसङ्गेन, तत्त्वं तु परमर्षयो विदन्ति ॥ ९८ ॥

॥ इति श्रुतदेवतादिकायोत्सर्गस्थापनाधिकारः ॥ ९८ ॥

ननु-श्रीखरतरगच्छीयसाधुसाध्व्यः सुविहितनामबिभ्राणा अपि मृत्तिकाघटकेन पानीयं विहरन्ति तत्र रक्षन्ति तत् किं तत्र जीवसंसक्तिसद्भावात्? उच्यते, श्रीस्थानाङ्गे ( ११८ पत्रे ) तृतीयस्थाने तृतीयोद्देशके पानीयघटस्य साधुसाध्वीनां उक्तत्वात् तथाहि-"कप्पइ निग्गंथाण वा निग्गंथीण वा तओ पायाइं धारित्तए वा परिहरित्तए वा तं० लाउयपादे वा दारुपादे वा मट्टियापादे वा" (सूत्रं १७०) व्याख्या-अलाबुपात्रकं-तुम्बकं दारुपात्रं-काष्ठमयं मृत्तिकापात्रं-मृण्मयं शराववार्घटिकादि, शेषं सुगमं, अत्र वार्घटिकाशब्देन पानीयलघुघटिका प्रोक्ताः। जीवोत्पत्तिपर्यन्तं तु यतनावन्तः साधवो रक्षन्त्येव न कथंचित् रक्षणे तु तत्रोत्पन्नपूतरकजीवपानीयं ग्रन्थोक्तविधिना गृहस्थादिभ्यः प्रयच्छन्ति, प्रत्युत काष्ठलोष्टिकादिधारणे तु जीवदोषस्य साक्षात् दृश्यमानत्वात् बहुमूल्यत्वाच्च। न तद्धारणनियमो विचार्यमाणं संयमसुखावहो मृत्तिकापानीयलघुघटिकाः तु अल्पमूल्यत्वात् सुखेन शुद्धत्वेन मिलनत्वात् संयमोपष्टम्भकारिणो भवतीति युक्तमेव तद्धारणम् ॥ ९९ ॥

॥ इति मृत्तिकापानीयघटिकारक्षणाधिकारः ॥ ९९ ॥

ननु-संघादीनां विघ्नोपद्रवशान्त्यै शान्तिविधिः क्रियते स शान्तिविधिः कः?, कुत्र प्रतिपादितश्च? उच्यते-स विधिः कोऽपि प्राक्तनलिखितानुसारेण, कोऽपि च महेभ्यादौ [उत्सवे] विधिज्ञश्रावककियमाणानुक्रमस्य स्वयं दर्शनेन च लिख्यते, तथाहि-

शुभदिने शुभवेलाया शुभमुहूर्ते सघस्य कारकस्य वा चन्द्रबले सति गुरूपदेशेन सघस्य समुदाय सर्व मेलयित्वा देवगृहे समेत्य स्नात्रकरणानन्तर देवाग्रतः धौत पवित्र निश्चलं पट्टक स्थापयित्वा तदुपरि केशरादितिलकपूर्वं ज्ञान–दर्शन–चारित्राणा अनुक्रमेण तन्दुलपुञ्जिकारूपा स्थापना क्रियते, ततो मूलनायकस्य दक्षिणाङ्गे इन्द्र १ अग्नि २ यम ३ नैर्ऋत ४ वरुण ५ वायु ६ कुबेर ७ ईशान ८ ब्रह्म ९ नागाना १० दशदिक्पालानां पूर्ववत् स्थापना क्रियते, ततो मूलनायकवामाङ्गे आदित्य १ सोम २ मगल ३ बुध ४ बृहस्पति ५ शुक्र ६ शनैश्चर ७ राहु ८ केतु ९ नवग्रहस्थापना क्रियते, ततः तद्दिस्येष चैत्यदेवता १ क्षेत्रदेवता २ देशदेवता ३ स्थापनात्रय क्रियते, एव २५ पुञ्जिकाना स्थापना कार्या । तदनु सर्वासा पुञ्जिकानामुपरि बलिपुष्पधूपनैवेद्यवासादिप्रक्षेप' कार्यः । तत —

पुञ्जिकासु च ये देवा, देव्योऽपि गुरुणोदिता । बलिपूजां प्रतीच्छन्तु, सन्तु सघस्य शान्तये ॥ १ ॥

अनेन श्लोकेन सर्वासामुपरि अखण्डजलधारादान कार्य, तत सर्व गृहागते पर्पटादिमिश्रभाजन बृहत्तर भृत्वा एकस्य हस्ते दत्त्वा पूर्वदिक्सम्मुख भूत्वा जलधारादानपूर्वं पूर्वदिशि बलि प्रक्षिप्यते, तत्र–श्लोकश्चाऽयम्—

ऐरावतसमारूढः, शक्रः पूर्वदिशि स्थितः । सघस्य शान्तये सोऽस्तु, बलिपूजा प्रतीच्छतु ॥ १ ॥

एवमाग्नेय्यां दिशि–आग्नेय्याविदिश' स्वामी, श्रीवह्निश्छागवाहन । सघस्य शान्तये सोऽस्तु, बलिपूजा प्रतीच्छतु ॥ २ ॥

एव दक्षिणस्या दिशि–दक्षिणस्या दिशः स्वामी, यमो महिषवाहन । सघस्य शान्तये सोऽस्तु, बलिपूजा प्रतीच्छतु ॥ ३ ॥

एवं नैर्ऋतदिशि–याम्यऽपातरालेऽसौ, नैर्ऋति शववाहन । सघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ४ ॥

विषयेऽपि बहु विमर्शनीयं, यतो दैवसिकावश्यकमध्ये सामान्यतो वैयावृत्यकरान् विमुच्य केवलश्रुतदेवतादे कायोत्सर्गकरण, पाक्षिकादौ तु भवनदेव्याः, दीक्षादौ तु शासनदेव्यादीनामपि, अलं प्रसंगेन, तत्त्वं तु परमर्षयो विदन्ति ॥ ९८ ॥

॥ इति श्रुतदेवतादिकायोत्सर्गस्थापनाधिकारः ॥ ९८ ॥

ननु–श्रीखरतरगच्छीयसाधुसाध्व्यः सुविहितनामविख्याणा अपि मृत्तिकाघटकेन पानीय विहरन्ति तत्र रक्षन्ति तत् किं तत्र जीवसंसक्तिसद्भावात्? उच्यते, श्रीस्थानाङ्गे (१६८ पत्रे) तृतीयस्थाने तृतीयोद्देशके पानीयघटस्य साधुसाध्वीनां उक्तत्वात् तथाहि–"कप्पइ निग्गथाण वा निग्गथीण वा तओ पायाइ धारित्तते वा परिहरित्तते वा त० लाउयपादे वा दारुपादे वा मट्टियापादे वा" (सूत्र १७०) व्याख्या–अलाबुपात्रक–तुम्बक दारुपात्र–काष्ठमय मृत्तिकापात्र–मृण्मय शरावघटिकादि, शेष सुगम, अत्र वार्घटिकाशब्देन पानीयलघुघटिका प्रोक्ताः। जीवोत्पत्तिपर्यन्त तु यतनावन्त साधवो रक्षन्त्येव न कथंचित् रक्षणे तु तत्रोत्पन्नपूतरकजीवपानीयं ग्रन्थोक्तविधिना गृहस्थादिभ्यः प्रयच्छन्ति, प्रत्युत काष्ठलोष्टिकादिधारणे तु क्रीतदोषस्य साक्षात् दृश्यमानत्वात् बहुमूल्यत्वाच्च। न तद्धारणनियमो विचार्यमाणः संयमसुखावहो मृत्तिकापानीयलघुघटिका तु अल्पमूल्यत्वात् सुखेन शुद्धत्वेन मिलनत्वात् संयमोपष्टम्भकारिणो भवतीति युक्तमेव तद्धारणम् ॥ ९९ ॥

॥ इति मृत्तिकापानीयघटिकारक्षणाधिकारः ॥ ९९ ॥

ननु–सघादीनां विघ्नोपद्रवशान्त्यै शान्तिविधिः क्रियते स शान्तिविधिः कः?, कुत्र प्रतिपादितश्च? उच्यते–स विधिः कोऽपि प्राक्तनलिखितानुसारेण, कोऽपि च महेवादौ [उत्सवे] विधिश्रावककियमाणानुक्रमस्य स्वयं दर्शनेन च लिख्यते, तथाहि–

क्रियन्ते, मङ्गलप्रदीपश्च घृतमयः कुसुम्भलवृत्तिकश्च तादृग्विधेयो यथा एकयैव वृत्त्या प्रज्वलन् सपूर्णशान्तिघोषणादिकृत्यं यावत् न विध्याति [संपूर्ण]। पश्चात् चतुर्विधसंघसहितो गुरुः ईर्यापथिकीं प्रतिक्रम्य शक्रस्तव आदितः कृत्वा अष्टादशभिः स्तुतिभिर्देवादीन् वन्दते, आन्तरणीदोषो न कर्तुं देयः, देवतायाश्च स्तुतय इमाः—यदग्निनमनादेव, देहिनः सन्ति सुस्थिता । तस्मै नमोऽस्तु वीराय, सर्वविघ्नविघातिने ॥ १ ॥ सुरपतिनतचरणयुगा—न्नाभेयजिनादिजिनपतीन् नौमि । यद्वचनपालन-परा, जलाञ्जलिं ददतु दुःखेभ्यः ॥ २ ॥ वन्दन्ति वन्दारुगणाग्रतो जिना', सदर्थतो यद्रचयन्ति सूत्रतः । गणाधिपास्तीर्थ-समर्थनक्षणे, तदङ्गिनामऽस्तु मत नु मुक्तये ॥ ३ ॥ शक्र' सुरासुरवरैः सहदेवताभिः, सर्वज्ञशासनसुखाय समुद्यताभिः । श्रीवर्धमानजिनदत्तमतप्रवृत्तान्, भव्यान् जनानवतु नित्यममङ्गलेभ्यः ॥ ४ ॥ ततः श्रीशान्तिनाथदेवाधिदेवाराधनार्थं करेमि काउस्सग्ग अन्नत्थू इत्यादि । रोगशोकादिभिर्दोषै—रजिताय जितारये । नमः श्रीशान्तये तस्मै, विहितानत-शान्तये ॥ ५ ॥ तत' श्रीशान्तिदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । श्रीशान्तिजिनभक्ताय, भव्याय सुख-सम्पदम् । श्रीशान्तिदेवता देया—दशान्तिमपनीय [ते] मे ॥ ६ ॥ तत । श्रीश्रुतदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । सुवर्णशालिनी देयाद्, द्वादशाङ्गी जिनोद्भवा । श्रुतदेवी सदा मह्य—मशेषश्रुतसम्पदम् ॥ ७ ॥ ततः श्रीभवन-देवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । चतुर्वर्णाय सघाय, देवीभवनवासिनी । निहत्य दुरितान्येपा, करोतु सुखमक्षतम् ॥ ८ ॥ तत क्षेत्रदेवतानिमित्तक करेमि काउस्सग्ग अन्नत्थू इत्यादि । यासा क्षेत्रगता सन्ति, साधयः श्रावकादयः । जिनाज्ञां साधयन्तस्ता, रक्षन्तु क्षेत्रदेवताः ॥ ९ ॥ तत' श्रीअम्बिकादेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू

एवं पश्चिमदिशि—यः प्रतीच्या दिशो नाथो, वरुणो मकरस्थितः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ५ ॥ एवं वायव्यदिशि—हरिणो वाहनं यस्य, वायव्याधिपतिः स्मरः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ६ ॥ एवमुत्तरदिशि—निधाननवकारूढ, उत्तरस्या दिशः प्रभुः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ७ ॥ एवमीशानदिशि—सिते वृषेऽधिरूढः स—श्रीशानो विदितः प्रभुः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ८ ॥ एवमधोदिशि—पातालाधिपतिर्योऽस्ति, सर्वदा पद्मवाहनः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ ९ ॥ एवमूर्ध्वदिशि—ब्रह्मलोकविभुर्योऽस्तु, राजहंससमाश्रितः। संघस्य शान्तये सोऽस्तु, बलिपूजां प्रतीच्छतु ॥ १० ॥ एवं दशस्वपि दिक्षु जलधारादानेन स्वस्वदिक्स्वामि श्लोकप्रतिपादेन च बलिः प्रक्षिप्यते, प्रथम प्रान्ते च श्लोकादौ नमोऽर्हत्सिद्धेति कथ्यते। एतस्मिन् विधौ कृतेऽत्र प्रस्तावे यदि संघसामुदायिका शान्तिः तदा देवगृहसत्कः कलशो गृह्यते, यदि एकः कोऽपि कारयति तदा शान्तिकारकगृहात् चतुरस्त्रलसधवसुन्दरीशिरसि आरोप्य मङ्गलगीतगानतानमानदानपात्रजन्यभव्यादिवादित्रे वाद्यमाने अन्तर्धवलितः पञ्चरत्नोपेतः मुखवेष्टितमुद्गलीसूत्र उपरि समाच्छादितकसुम्भलवकः कलशः समानीय पूर्वकृतस्वस्तिकोपरि स्थाप्यते कलशमध्ये श्रीशान्तिनाथप्रतिमा निश्चला सुसज्जिता कृत्वा मोच्या, कलशोपरिष्टात् ऊर्ध्वं तणीचतुष्कमध्ये उपर्युपरि प्रोतलाजिलीपङ्क्तिश्च बध्यते, तणीमध्यस्थो मङ्गुलीदवरको लम्बमानस्तथा बध्यते यथा कलशोपरि मुखमध्यभागे तिष्ठति, तत्र च संघसमुदायको मङ्गलीकञ्चुको बध्यते, कलशस्य पुष्पचन्दनपूजा कार्या। गुरुरपि वासक्षेपं करोति। ततः कलशाग्रे कुसुमाञ्जलि १ लवणपानीय २ परिधापनिका ३ आरात्रिक ४ मङ्गलप्रदीपा ५

अस्मिन् कायोत्सर्गे लोगस्स ४ पारिते लोगस्स १ तत उपविश्य नमस्कारशक्रस्तवादिकथनपूर्वं जयवीयरायपर्यन्त वाच्य । ततः सपूर्णाङ्गोपाङ्गाः सभार्याः सुशीला सपुत्रा समृद्धा बद्धहस्तमङ्गुलीदवरका गुणनभणनविचक्षणा अष्टौ इन्द्र-स्थानीयाः परिहितधौतिका आकार्यन्ते, तत्र द्वौ हस्तयोः कलशं गृहीत्वा तिष्ठत, एको धूप ददाति, एकः कुसुमचन्दन-वासक्षेप करोति, अन्ये चत्वारो मधुरस्वरेण शान्तिपूर्वक समस्मरणादि गुणयन्ति । तथा द्वौ कलशधारकौ कुण्डिकात कलशान् भृत्वा सस्तनमस्कारपूर्वं सप्तजलधारा दत्तः पश्चात् नमोऽर्हत्सिद्धाचार्योपाध्यायेति पूर्वं अजितशान्तिस्तवः पठ्यते, पदे पदे जलधारादानं एवमग्रेतनस्मरणे अपि, भक्तामरशान्तिद्वयादीन्यपि । एवमन्योऽपि सर्वसंघ समस्मरणादि गुण-यति पश्चाद् भृते मूलकलशे पूर्वं रक्षित श्रीपार्श्वनाथप्रक्षालनपानीयमपि कलशमध्ये क्षिप्यते, ततो मङ्गलप्रदीप भ्रामयित्वा—

चेलोत्क्षेपैः पुष्पधूपादिदानैः, सम्मान्यश्रीदिक्पतीना विसर्गम् ।

कृत्वा शेषान् शेषदिव्यावतारान्, प्रासानारात् प्रेषयेत् स्वाधिवासान् ॥ १ ॥

अर्हदभिषेकदर्शित—सान्निध्यनिरस्तकल्मषोल्लाघाः । गच्छन्ति यथास्थाने, ये केचिदुपागता देवाः ॥ २ ॥

शक्राद्या लोकपाला दिशि विदिशि गताः शुद्धसद्धर्मसक्ता, आयाताः स्नात्रकाले कलशहृतिकृते तीर्थनाथस्य भक्त्या ।
न्यस्ता शेषाऽऽपदाद्या विहितशिवसुखाः स्वास्पद साम्प्रत ते, स्नात्रे पूजामवाप्य स्वमपि कृतमुदो यान्तु कल्याणभाज ॥ ३ ॥

अनेन पद्यत्रयेण दिक्पालविसर्जनं क्रियते, पश्चात् सर्वोऽपि सघो देवगृहे निकरादानपूर्वं शान्तिजल केन्दुकसत्क-मङ्गुलीसूत्रं च लाति, मङ्गुलीसूत्रं हस्तादौ बध्यते, कलशमध्याच्छान्तिजलं गृहीत्वा सर्वत्र गृहादौ प्रक्षिप्यते, तत सघ-

इत्यादि । अम्बा निहितडिम्भा मे, सिद्धबुद्धसुतान्विता । सिते सिंहे स्थिता गौरी, वितनोतु समीहितम् ॥ १० ॥ ततः श्रीपद्मावतीदेवतानिमित्त करेमि काउस्सग्गं अन्नत्थू इत्यादि । धराधिपतिपत्नीया, देवी पद्मावती सदा । क्षुद्रोपद्रवतः सा मां, पातु फुल्लत्फणावलीः ॥ ११ ॥ ततः श्रीचक्रेश्वरीदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । चञ्चच्चक्रकरा चारु-प्रवालदलसन्निभा । चिरं चक्रेश्वरी देवी, नन्दतादवताच्च माम् ॥ १२ ॥ ततः श्रीअच्छुप्तादेवतानिमित्त करेमि काउस्सग्गं अन्नत्थू इत्यादि । खड्गखेटककोदण्ड-बाणपाणितडिद्द्युति । तुरङ्गगमनाऽच्छुप्ता, कल्याणानि करोतु मे ॥ १३ ॥ ततः श्रीकुबेरादेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । मथुरापुरि सुपार्श्व-श्रीपार्श्वस्तूपरक्षिका । श्रीकुबेरा नरारूढा, सुताङ्काऽवतु वो भयात् ॥ १४ ॥ ततः श्रीब्रह्मशान्तिदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । ब्रह्मशान्तिः स मां पाया-दपायाद्वीरसेवकः । श्रीमत्सत्यपुरे सत्या, येन कीर्तिं कृता निजा ॥ १५ ॥ ततः श्रीगोत्रदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । या गोत्र पालयत्येव, सकलाऽपायतः सदा । श्रीगोत्रदेवता रक्षा, सा करोतु नताऽङ्गिनाम् ॥ १६ ॥ ततः श्रीशक्रादिसमस्तदेवतानिमित्त करेमि काउस्सग्ग अन्नत्थू इत्यादि । श्रीशक्र-प्रमुखा यक्षाः, जिनशासनसंस्थिताः । देवदेव्यस्तदन्येऽपि, संघ रक्षन्त्वपायतः ॥ १७ ॥ ततः सिद्धायिका-श्रीशासनदेवतानिमित्तं करेमि काउस्सग्ग अन्नत्थू इत्यादि । श्रीमद्विमानमारूढा, यक्षमातङ्गसेविता । सा मां सिद्धायिका पातु, चक्र-चापेषु धारिणी ॥ १८ ॥

अस्मिन् कायोत्सर्गे लोगस्स ४ पारिते लोगस्स १ तत उपविश्य नमस्कारशक्रस्तवादिकथनपूर्वं जयवीयरायपर्यन्तं घाप्यं । ततः सपूर्णाङ्गोपाङ्गाः समार्याः सुशीलाः सपुत्रा समृद्धा मध्वस्तमङ्गुलीदवरका गुणनभणनविचक्षणा अष्टौ इन्द्र-स्थानीयाः परिहितधौतिका आकार्यन्ते, तत्र द्वौ हस्तयोः कलशं गृहीत्वा तिष्ठत, एको धूपं ददाति, एकः कुसुमचन्दन-वासक्षेपं करोति, अन्ये चत्वारो मधुरस्वरेण शान्तिपूर्वकं सप्तस्मरणादि गुणयन्ति । तथा द्वौ कलशधारकौ कुण्डिकातः कलशान् भृत्वा सघनमस्कारपूर्वं ससजलधारा दत्तः पश्चात् नमोऽर्हत्सिद्धाचार्योपाध्यायेति पूर्वं अजितशान्तिस्तवः पठ्यते, पदे पदे जलधारादानं एवमग्रेतनस्मरणे अपि, भक्तामरशान्तिद्वयादीन्यपि । एवमन्योऽपि सर्वसंघः सप्तस्मरणादि गुण-यति पश्चात् भृते मूलकलशे पूर्वं रक्षितं श्रीपार्श्वनाथप्रक्षालनपानीयमपि कलशमध्ये क्षिप्यते, ततो मङ्गलप्रदीपं भ्रामयित्वा—

चेलोत्क्षेपैः पुष्पधूपादिदानैः, सम्मान्यश्रीदिक्पतीनां विसर्गम् ।

कृत्वा शेषान् शेषदिव्यावतारान्, प्रासानारात् प्रेषयेत् स्वाधिवासान् ॥ १ ॥

अर्हदभिषेकदर्शित—सान्निध्यनिरस्तकल्मषोल्लापाः । गच्छन्ति यथास्थाने, ये केचिदुपागता देवा ॥ २ ॥

शक्राद्या लोकपाला दिशि विदिशि गताः शुद्धसद्धर्मसक्ताः, आयाताः स्नात्रकाले कलशहृतिकृते तीर्थनाथस्य भक्त्या ।
न्यस्ता शेषाऽपदाद्या विहितशिवसुखाः स्वास्पदं साम्रतं ते, स्नात्रे पूजामवाप्य स्वमपि कृतमुदो यान्तु कल्याणभाज ॥ ३ ॥

अनेन पद्यत्रयेण दिक्पालविसर्जनं क्रियते, पश्चात् सर्वोऽपि संघो देवगृहे निकरादानपूर्वं शान्तिजलं केन्दुकसत्क-मङ्गुलीसूत्रं च लाति, मङ्गुलीसूत्रं हस्तादौ बध्यते, कलशमध्याच्छान्तिजलं गृहीत्वा सर्वत्र गृहादौ प्रक्षिप्यते, ततः संघ-

मध्ये नगरमध्ये देशमध्ये सर्वत्र शान्तिर्भवति, ऋद्धिसमृद्धिवृद्धिसिद्धिसंपदो भवन्ति, आधिव्याधिरोगशोकक्षुद्रोपद्रवाश्च द्रुतं दूरतो यान्ति ॥ १०० ॥

॥ इति श्रीशान्तिकविधिरधिकारः संपूर्णः ॥ १०० ॥

खरतरगच्छाधीशा, जिनचन्द्रयुगप्रधानगुरुराजाः । श्रीपातिसाहिमान्या, समभूवन् भूमिविख्याताः ॥ १ ॥
श्रीपूज्यमुख्यशिष्याः, दक्षाः श्रीसकलचन्द्रनामानः । मद्गुरवो गुणगुरव–स्तेषामेष प्रसादो मे ॥ २ ॥
एवं द्वादशभिः सम्यक्–पूर्णं प्रश्नोत्तरैः स्फुटम् । प्रकाशं पञ्चमं चक्रे, गणिः समयसुन्दरः ॥ ३ ॥

॥ इति श्रीसमयसुन्दरोपाध्यायविरचिते पञ्चमप्रकाशे श्रीसामाचारीशतके पञ्चमः प्रकाशः संपूर्णः ॥ ५ ॥

## ॥ ग्रन्थकृत्प्रशस्तिः ॥

सामाचारीशतकमिदमासूत्रित सूत्रगत्या, किंचित् वृत्तिप्रकरणवशात् सम्प्रदायाच्च किंचित् ।
चेद् ग्रन्थेऽस्मिन् भवति किमपि श्रीजिनाज्ञाविरुद्ध, सघाध्यक्ष मम जडधियो दुष्कृत स्याच्च [तस्य] मिथ्या ॥ १ ॥
जैना गच्छा जगति बहवो भिन्नभिन्नाभिधाना, भिन्नाचारा निजनिजमत स्थापयन्ति प्रमाणम् ।
गच्छाधीशा' श्रुतनिगदिता संमतिं दर्शयन्ति, [तद्व्यामोहो] तस्या मोहो न भवति कथ ? यज्जिनाज्ञैव सत्या ॥ २ ॥
प्रारब्ध किल सिन्धुदेशविषये श्रीसिद्धपुर्यामिद, मूलत्राणपुरे कियद्धिरचित वर्षत्रयात् प्रागूमया ।
सपूर्णं विदधे पुरे सुखकरे श्रीमेडतानामके, श्रीमद्विक्रमसवति द्वि-मुँनि-षँट्-प्रालेयरोचिर्मिते १६७२ ॥ ३ ॥
प्रवर्तमाने जिनवीरशासने, परम्पराया गणभृत्सुधर्मणः। श्रीवज्रशाखा सुकुले च चान्द्रे, गणे स्फुटे कौटिकनामधेये ४
श्रीपातिसाहिमान्ये, युगप्रधाने प्रधानसौभाग्ये । खरतरगच्छाधीशे, विजयि जिनसिंहसूरिगुरौ ॥ ५ ॥
अकब्बरसाहिस्तुमान्य , श्रीमज्जिनचन्द्रसूरिगुरुराजा । जाता युगप्रधाना-स्तच्छिष्य सकलचन्द्रगणि ॥ ६ ॥
तच्छिष्यसमयसुन्दर-सदुपाध्याया अकार्षुरिदमेवम् । सामाचारीशतक, सतत स्वपरोपकाराय ॥ ७ ॥
सुशिष्यो वाचनाचार्य,-स्तर्कव्याकरणादिवित् । हर्षनन्दनवादीन्द्रो, मम साहाय्यदायकः ॥ ८ ॥

इति श्रीसमयसुन्दरोपाध्यायविरचिते पञ्चमप्रकाशे श्रीसामाचारीशतक सपूर्णम् ॥

## ॥ लेखक–प्रशस्तिः ॥

श्रीमद्विक्रमतो धराङ्गगगनप्रालेयरोचिर्मिते, वर्षे लोद्रपुरे वरे यदुकुले भाटीसुगोत्रेऽभवत् ।
राजा श्रीसगरः प्रजासुखकरस्तत्सुन्दरी श्रीमती, सौख्यं भुक्तवतोस्तयो समभवन्नेकादशेहाऽऽत्मजाः ॥ १ ॥
अष्टौ तेषु मृताश्च मारिवशतो दुर्दैवतोऽनुक्रमे, दुःखात्तौ पितरौ वियोगविधुरौ जातौ च तस्मिन् क्षणे ।
कुर्वाणा विहृतिक्रमात् क्षितितले श्रीवर्धमानप्रभोः, शिष्याः सूरिजिनेश्वराः खरतरा श्रीलोद्रपुर्यां गता ॥ २ ॥
राजाद्याः सपरिग्रहाः प्रमुदिता नन्तुं गताः सद्गुरून्, श्रुत्वा श्रीजिनधर्ममर्म सकलं सन्तोषमापुस्तराम् ।
विज्ञप्तिं विदधे नृपः करयुगं संयोज्य राज्ञाऽन्वितः, स्वामिन्नष्ट ममाङ्गजा मृतिमगुर्जीवत्ययो ते त्रय ॥ ३ ॥
तत्कार्यं च यथा परोपकृतिभिर्जीवेत् सुताना त्रयं, लाभो वो भविता स को नृपतिना प्रोक्त तदा मत्पदे ।
राजाऽय भविता सुतः कुलधरः श्रीजैनधर्मी पुनः, पुत्रौ श्रीधरनामराजधरकौ शुद्धात्मिकौ भाविनौ ॥ ४ ॥
ज्ञात्वा लाभममु तथैव गुरुभी रक्षाकृताम्नायतो, वासक्षेपवशेन तौ नृपसुतौ श्राद्धौ कृतौ भ्रातरौ ।
ताभ्यां लोद्रपुरे जिनेन्द्रभवनं प्रोच्चैस्तरं कारितं, तद्गोत्रं भणशालिनाम समभूत्प्राणादिशालावशात् ॥ ५ ॥
श्रीधरश्रावकस्याऽऽसन्, पञ्च पुत्रा अनुक्रमात् । सीमसी १ भीमसीनामा २, जगसी ३ रूपसी ४ तथा ।
देवसी ५ च यथा ख्याताः, पाण्डवाः पाण्डुभूपतेः ॥ ६ ॥

सीमसीश्रावकस्याऽऽसीत्, कुलचन्द्रस्तनूरुहः तत्पुत्रो रामदेनामा, धनपालस्तदग्रज ॥ ७ ॥
साधारणाख्यस्तत्पुत्रः पुण्यपालस्तदग्रज । तत्सूः सज्जूस्ततोदेपू—स्तत्पुत्रस्तस्य गज्जकः ॥ ८ ॥
ज्येताख्यो नन्दनस्तस्य, खेतानामा तदग्रभू । आसकर्णश्च तत्पुत्र—स्तत्पुत्रो धस्तुपालक ॥ ९ ॥
पुञ्जानामा च तत्पुत्रः, श्रीयशोधवलस्तत । तत्पुत्रः पुञ्जसीनामा, श्रीमल्लस्तस्य नन्दनः ॥ १० ॥
श्रीमल्लाङ्गजथाहरू सुरतरुर्दानप्रदानेऽधिको, यो भाण्डारमचीभरञ्चनवै शास्त्रै स्वय लिखितैः ।
अर्हच्छासनमेकविंशतिसहस्राणीह वर्तिष्यते, तत्तु प्रोज्वलपुस्तकेष्वधिगत बुद्ध्या विचार्येति च ॥ ११ ॥
आषाढाश्विनचैत्रभाद्रपदमासाष्टाह्निकापर्वणि, श्रीमज्जेसलमेरुदुर्गनगरे चैत्येषु सप्तस्वपि ।
काश्मीराभिधकेशरेण भगवद्बिम्बानि यः पूजयेत्, सद्भक्त्या शतश सृजन् स्वपरयो सम्यक्त्वमत्युज्ज्वलम् ॥ १२ ॥
गुप्त दानमपि प्रयच्छति मुदा सद्धर्मिणा सीदता, दीनाना च ददाति सुन्दरतरा सो वर्डका नामत ।
चातुर्मासिकपाक्षिकाब्दिकमहाष्टम्यादिके पर्वणि, प्रातः पारणक ददाति सतत य पौषधाख्य कृताम् ॥ १३ ॥
यः श्रीलोद्रपुरे पुराणनगरे भूयिष्ठद्रव्यव्ययात्, चैत्योद्धारमुदारचित्तपरिणामोऽकारयत् सादरम् ।
श्रीचिन्तामणिपार्श्वमूर्तियुगल तत्रैव चाऽस्थापयत्, सोल्लास जिनराजसूरिगुरुभिर्हस्तप्रतिष्ठापितम् ॥ १४ ॥
यः कुण्डलाकृतिभृतां जयलब्धिकाना, कृत्वा च पुञ्जमतुल मनुजावपुषि ।

## ॥ लेखक–प्रशस्तिः ॥

श्रीमद्विक्रमतो धराङ्गगगनप्रालेयरोचिर्मिते, वर्षे लोद्रपुरे वरे यदुकुले भाटीसुगोत्रेऽभवत् ।
राजा श्रीसगर प्रजासुखकरस्तत्सुन्दरी श्रीमती, सौख्य भुक्तवतोस्तयो समभवन्नेकादशोद्दाऽऽत्मजाः ॥ १ ॥
अष्टौ तेषु मृताश्च मारिवशतो दुर्दैवतोऽनुक्रमे, दुःखार्त्तौ पितरौ वियोगविधुरौ जातौ च तस्मिन् क्षणे ।
कुर्वाणा विहृतिक्रमात् क्षितितले श्रीवर्धमानप्रभोः, शिष्या सूरिजिनेश्वरा खरतरा श्रीलोद्रपुर्यां गता ॥ २ ॥
राजाद्याः सपरिग्रहाः प्रमुदिता नन्तुं गताः सद्गुरून्, श्रुत्वा श्रीजिनधर्ममर्म सकल सन्तोषमापुस्तराम् ।
विज्ञप्तिं विदधे नृपः करयुग संयोज्य राज्ञाऽन्वित, स्वामिन्नष्ट ममाऽङ्गजा मृतिमगुर्जीवत्ययो ते त्रय ॥ ३ ॥
तत्कार्यं च यथा परोपकृतिभिर्जीवेत् सुताना त्रयं, लाभो वो भविता स को नृपतिना प्रोक्त तदा मत्पदे ।
राजाऽयं भविता सुतः कुलधरः श्रीजैनधर्मी पुनः, पुत्रो श्रीधरनामराजधरकौ शुद्धास्तिकौ भाविनौ ॥ ४ ॥
ज्ञात्वा लाभममु तथैव गुरुभी रक्षाकृताम्नायतो, वासक्षेपवशेन तौ नृपसुतौ श्राद्धौ कृतौ भ्रातरौ ।
ताभ्या लोद्रपुरे जिनेन्द्रभवन प्रोत्तुङ्गस्तर कारित, तत्रोत्र मणशालिनाम समभूत्प्राज्ञादिधालावशात् ॥ ५ ॥
श्रीधरश्रावकस्याऽऽसन्, पञ्च पुत्रा अनुक्रमात् । श्रीमसी १ भीमसीनामा २, जगसी ३ रूपसी ४ तथा ।
देवसी ५ च यथा ख्याताः, पाण्डवाः पण्डुभूपतेः ॥ ६ ॥

स्रीमसीश्रावकस्याऽऽसीत्, कुलचन्द्रसनूरुहः तत्पुत्रो रामदेनामा, धनपालस्तदङ्गजः ॥ ७ ॥
साधारणाख्यस्तत्पुत्रः पुण्यपालस्तदङ्गजः । तत्सू सज्जूस्तथोदेदु-स्तत्पुत्रस्तस्य गजकः ॥ ८ ॥
ज्येताख्यो नन्दनस्तस्य, खेतानामा तदङ्गभूः । आसकर्णश्च तत्पुत्र-स्तत्पुत्रो वस्तुपालकः ॥ ९ ॥
पुञ्जानामा च तत्पुत्रः, श्रीयशोधवलस्ततः । तत्पुत्रः पुञ्जसीनामा, श्रीमल्लस्तस्य नन्दनः ॥ १० ॥
श्रीमल्लाङ्गजथाहरू- सुरतरुर्दानप्रदानेऽधिको, यो भाण्डारमधीभरच्चवनवै शास्त्रैः स्वयं लिखितै ।
अर्हच्छासनमेकविंशतिसहस्राणीह वर्तिष्यते, तत्तु प्रोज्वलपुस्तकेष्वधिगतं बुद्ध्वा विचार्येति च ॥ ११ ॥
आषाढाश्विनचैत्रभाद्रपदमासाष्टाह्निकापर्वणि, श्रीमज्जेसलमेरुदुर्गनगरे चैत्येषु सप्तस्वपि ।
काश्मीराभिधकेशरेण भगवद्बिम्बानि य पूजयेत्, सद्भक्त्या शतशः सृजन् स्वपरयोः सम्यक्त्वमत्युज्ज्वलम् ॥ १२ ॥
गुप्त दानमपि प्रयच्छति मुदा सद्धर्मिणा सीदता, दीनाना च ददाति सुन्दरतरा सो वर्डका नामत ।
चातुर्मासिकपाक्षिकाब्दिकमहाष्टम्यादिके पर्वणि, प्रात पारणक ददाति सतत यः पौपधाख्य कृताम् ॥ १३ ॥
यः श्रीलोद्रपुरे पुराणनगरे भूयिष्ठद्रव्यव्ययात्, चैत्योद्धारमुदारचित्तपरिणामोऽकारयत् सादरम् ।
श्रीचिन्तामणिपार्श्वसूर्तियुगल तत्रैव चाऽस्थापयत्, सोल्लास जिनराजसूरिगुरुभिर्हस्तप्रतिष्ठापितम् ॥ १४ ॥
यः कुम्भलाकृतिभृतां जयलब्धिकाना, कृत्वा च पुञ्जमतुल मनुजावपुपि ।

## ॥ लेखक—प्रशस्तिः ॥

श्रीमद्विक्रमतो धराङ्गगगनप्रालेयरोचिर्मिते, वर्षे लोद्रपुरे वरे यदुकुले भाटीसुगोत्रेऽभवत् ।
राजा श्रीसगरः प्रजासुखकरस्तत्सुन्दरी श्रीमती, सौख्य भुक्तवतोस्तयो समभवन्नेकादशोद्वाऽऽत्मजा ॥ १ ॥
अष्टौ तेषु मृताश्च मारिवशतो दुर्दैवतोऽनुक्रमे, दुःखार्त्तौ पितरौ वियोगविधुरौ जातौ च तस्मिन् क्षणे ।
कुर्वाणा विहृतिक्रमात् क्षितितले श्रीवर्धमानप्रभोः, शिष्या सूरिजिनेश्वरा खरतरा श्रीलोद्रपुर्यां गता ॥ २ ॥
राजाद्याः सपरिग्रहाः प्रमुदिता नन्तु गताः सद्गुरून्, श्रुत्वा श्रीजिनधर्ममर्म सकल सन्तोषमापुस्तराम् ।
विज्ञप्तिं विदधे नृपः करयुग संयोज्य राज्ञाऽन्वितः, स्वामिन्नष्ट ममाऽङ्गजा मृतिमगुर्जीवत्ययो ते त्रय ॥ ३ ॥
तत्कार्यं च यथा परोपकृतिभिर्जीवेत् सुताना त्रय, लाभो यो भविता स को नृपतिना प्रोक्त तदा सत्पदे ।
राजाऽय भविता सुतः कुलधरः श्रीजैनधर्मी पुनः, पुत्रो श्रीधरनामराजधरको शुद्धास्तिको भाविनो ॥ ४ ॥
ज्ञात्वा लाभममु तथैव गुरुभी रक्षाकृताम्नायतो, वासक्षेपवशेन तो नृपसुतौ श्राद्धौ कृतौ भ्रातरो ।
ताभ्या लोद्रपुरे जिनेन्द्रभवन प्रोत्तुङ्ग कारित, तद्गोत्र भणशालिनाम समभूत्राण्डादिग्रामवशात् ॥ ५ ॥
श्रीधरश्रावकस्याऽऽसन्, पञ्च पुत्रा अनुक्रमात् । खीमसी १ भीमसीनामा २, जगसी ३ रूपसी ४ तथा ।
देवसी ५ च यथा ख्याताः, पाण्डवाः पण्डुभूपतेः ॥ ६ ॥

पुण्यकर्तव्यता काऽपि, प्रत्यक्षं ददृशे मया । काऽपि श्रुता सतां पक्षात्, प्रशस्तिर्लिखिताऽस्ति तत् ॥ २३ ॥
सामाचारीशतकममुना थाहरूशाहनाम्ना, पश्चाद्दर्शोष्वमलमतिना लेखितं पूर्वमेव ।
यावच्छ्रीमत्खरतरगणप्रोल्लसन्नाम तावत्, नन्दत्वेतच्चिरमनुपमं सर्वकल्याणकारि ॥ २४ ॥

## ॥ इति श्रीसामाचारीशतकं संपूर्णं ॥

सूरीश्वरो विजयते सुकृपादिचन्द्रः, शिष्योऽस्ति यस्य सुखसागरपाठकस्तु ।
तस्याऽऽज्ञया लिखितवान् पुरि मोहमय्यां, सुभावको विजयचन्द्र इमां प्रतिं तु ॥ १ ॥

---

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press,
26–28, Kolbhat Street, Bombay

---

Published by Jaweri Mulchand Hirachand Bhagat, Jinadattasuri Jain
Bhandar, Mahavir Swami's Temple, Pydhuni, Bombay

तामिर्मृश प्रघरभक्तिभृतस्तथा यत्, सा विसरिष्यति कदापि न किंवदन्ती ॥ १५ ॥
प्रासादेषु त्रिभुवनगुरोरष्टसख्येषु सम्यक्, दादास्तूपे मुखमलकथीपादिचञ्चत्पताकाः ।
कीर्त्युल्लासाद्दिशि दिशि समारोपयामास भक्त्या, यः श्रीदेवावसरजयिन शम्भव पूजयित्वा ॥ १६ ॥
य' सौवर्णं वरमभ्वरफीनाणक भक्तितोऽदात्, पूर्वं केनाऽपि न वितरित सर्वसाधर्मिकाणाम् ।
नित्य दत्ते सकलयतिनां वस्त्रपात्रान्नपान, कुर्वन् सामायिकजिनवच श्रुत्यमावश्यकादीन् ॥ १७ ॥
श्रीभाले तिलक पुनः श्रवणयोः सौवर्णसत्कुण्डले, ग्रीवाया मणिमौक्तिकादिजटित ग्रैवेयक भूषणम् ।
हस्ते श्रीफलमद्भुत शिववधूवि[वे]वाहनैमित्तिक, मन्ये सर्वमिद चकार सुकृती श्रीपार्श्वनाथस्य यः ॥ १८ ॥
वन्नार्या निजभर्तृभक्तिकरणे दक्षा सुपक्षद्वया, शुद्धाचारवती सती गुणवती युक्ता विवेकश्रिया ।
बाह्याभ्यन्तरभूषणाऽस्ति कनकादेवी प्रसिद्धाऽभिधा, यत्पुत्रौ हरिराज उत्तमगुण श्रीमेघराजस्तथा ॥ १९ ॥
यः पूर्वं भरतादिवञ्च तिलक कारापयित्वा गृहे, भूत्वा संघपतिर्धभूव पुरतः कृत्वा रय सत्वरम् ।
रुक्माणा निकर वर प्रतिपुर वर्षन् यशोऽप्यर्जयन्, श्रीशत्रुञ्जयतीर्थराजविलसद्यात्रा पवित्रा व्यधात् ॥ २० ॥
यत्सघे जिनराजसूरिगुरवो गच्छाधिराजेश्वरा, आचार्या जिनसागरा मुनिवरव्रातेन संशोभिता ।
मुख्यः संघपतिः शिवाख्य इतरे श्राद्धाः पुनर्गोत्वराः, अन्येऽपि व्यवहारिणो मरुधराः सत्कां सुयात्रां व्यधुः ॥ २१ ॥
विधुं-वर्सु-रसं-क्षोणि-वर्षे १६८१, राउलकल्याणदासनूपराज्ये । श्रीशत्रुञ्जयपर्वणो, विनिर्ममे वाहकेन ॥ २२ ॥

